॥ श्रीः ॥

# श्रीन्यायामृतकलाधरः

(अद्वैतसिद्धिब्रह्मानन्दीखण्डनात्मकः)

कोयमुत्तूरु ताम्रपर्णी श्रीनिवासाचार्यसूनुना
**ताम्रपर्णी मध्वाचार्येण**
**(श्री विश्वप्रियमध्वनाथश्रीचरणैः)**
विरचितः

संपादकः
**पं. श्रीनिवासाचार्यः ताम्रपर्णी**

प्रकाशनम् ;
**श्रीन्यायामृतप्रकाशनसेवासमितिः**
कल्याणपुरी
**1994**

श्रीः

# श्रीन्यायामृतकलाधरः

कोयमुत्तूरु ताम्रपर्णी श्रीनिवासाचार्यसूनुना

**ताम्रपर्णी मध्वाचार्येण**

**(श्रीविश्वप्रियमध्वनाथश्रीचरणैः)**

विरचितः

सपादकः

**पं. श्रीनिवासाचार्यः ताम्रपर्णी**

**श्रीन्यायामृतप्रकाशनसेवासमितिः**

हनुमन्तनगरम्, बेंगलूरु

1994

Nyayamrithakaladhara by His Holiness 1008 **Sree Vishwapriya Madhwatheerthasreepadangalavaru** of Sreerangam. An exhaustive criticism of Adwaitha Siddhi and Brahmanandi Critically edited with short notes by C.S.Srinivasacharya Tamraparni

**First edition -1968 -1000 copies**

**Second edition -1994 - 500 copies**

Price Rs .15/-

Copies can be had from the publishers;

**C.S.Srinivasacharya Tamraparni,**

Sree Nyayamritha Prakashana Seva Samithi,

821, 6th cross, 11th Main,

Hanumanthanagar,

Bangalore-560019

Ph 603607

**C.H. Seshagirisachar Tamraparni,**

Venkateshwara Estate

Veeranapura,

Chamarajanagar -571128

Ph-7575 (08226)

Printed by :

**Sree Hayavadana Mudranalaya,**

Bangalore -19

**Ph- 603607**

# विषयानुक्रमणिका

श्रीः

# श्रीन्यायामृतकलाधरस्य मुखबन्धः

अस्ति खल्वज्ञेषु प्रचारितो नाम कश्चिदपवादो माध्वाना , ते परकीयसिद्धान्तखण्डनदीक्षायामचतुरास्सन्तोऽपि वृथा तुच्छीकुर्वन्ति स्वमतबहिर्भूतान्सर्वानिति। नूनं सुधायां न्यायामृते तथास्मदीयेष्वितर ग्रन्थेषु स्वसिद्धान्तदार्ढ्याय परमतखण्डनं भूयः कृतम्। परन्तु प्रायशो नामनिर्देशो वा तुच्छभाषाप्रयोगो वा न सुतरां कृतः। सुधाध्येतारः पण्डिताः प्रमाणमस्मिन्नर्थे।

अद्वैतिनस्तावत्परदर्शनासहिष्णुत्वं माध्वदोषः नासौ सुतरां स्वाचार्यपरंपरासु दृश्यते इति मन्यन्ते। अहोऽयं भ्रमः! पश्यन्तु बुधाः न्यायामृताचार्यान् प्रति अद्वैतसिद्धावभिहित " इह कुमतिरतत्वे तत्ववादी वराकः प्रलपति यदकाण्डे खण्डनाभासमुच्चैः । प्रतिवचनममुष्मै तस्य को वक्ति विद्वान् न हि रुतमनुरौति ग्रामसिंहस्य सिंहः॥""तत्ववादी माध्वः " इति ब्रह्मानन्दीये व्याख्यातं च।

"प्रतिवचनममुष्मै तस्य को वक्ति विद्वान् " इत्युक्त्वाऽपि प्रतिज्ञाभङ्गमवज्ञाय त्रिशताधिकानि पत्राणि लिखितानि प्रतिवचनतया अद्वैतसिद्धौ । तद्द्विगुणाधिकं पुस्तकं रचयामास तच्छिष्यो ब्रह्मानन्दः । एवं ग्रन्थबाहुल्यरचनानन्तरमपि नेयाच्छान्तिं कोपः । तत्र तत्र " किं मन्दमते न मन्दाक्ष इति परिहारसपूर्व

न्यायामृतोक्तयुक्त्युपबृंहितानि वाक्यानि हीहीकृतानि । अनन्तरं न्यायामृताचार्यः पृष्टश्च "कस्माद्वृथा रोदिषि मन्दबुद्धे तव भ्रमादेव हि दुःखमेतत् । तस्यापनोदो विहितः प्रमाणैः तुभ्यं न रोचेत स नेति चित्रम् " इति ।

बहुग्रन्थनिर्माणानन्तरमपि स्वलिखितयुक्तीनां दौर्बल्यं स्वहृदन्तरान्तरे दृढनिश्चयेन परिज्ञाय "शेषं कोपेनं पूर्यते " इत्याभाणकमनुसृत्य कोपवशादपव्ययभाषया उपालब्धुमुद्यता बभूवुरद्वैतसिद्धिकाराः ।

दुःखमेतत् ! युक्तिपराजये स्यादेवातिदुःखं नाम । स्यादेव हि महत्तमं दुःखं पर्वतपिण्डीकरणोद्यमे विना वज्रेण मुष्टिघातेन । हेतुदोषं पुञ्जितानुमानबलाद्भावाविद्यास्थापने , निर्मानं सत्त्रैविध्यपरिकल्पने, मिथ्याभूतानुमानागमाभ्यां प्रपञ्चस्य मिथ्यात्वस्थापने, निर्गुणत्वेऽपि ब्रह्मणो जगदारोपाधिष्ठानत्वनिरूपणे , महान् दृश्यते परकीयश्रमः । तथा दुःखं च । अयं श्रमः सफलो वा निष्फलो वेति निर्णयं कुर्वन्तु बोद्धारो निर्मत्सरा जयपराजयपरीक्षानिपुणाः इति ॥

प्लवङ्ग पुष्य शुद्ध १५ | **ताम्रपर्णी मध्वाचार्यः**
कोयमुत्तूरु
18-1-1908

श्रीः

॥ श्रीगुरुराजो विजयते ॥

# भूमिका

आपादमौलिपर्यन्तं गुरूणामाकृतिं स्मरेत् ।
तेन विघ्नाः प्रणश्यन्ति सिद्ध्यन्ति च मनोरथाः ॥

करोतु मम कल्याणं हरिरीशमुखाभिधः ।
गुरुश्च मध्वनामा मे वरदोऽस्तु निरन्तरम् ॥

सुविदितमेवेदं विश्वेषां विदुषां निष्पक्षपातं शास्त्रविमर्शनाकाङ्क्षिणां यत् बुभुत्सुजनाभीप्सितपूरणाय सर्वोन्नत श्रीमदानन्दतीर्थभगवत्पादा एवालमिति । इदमप्यवश्यं वश्यं स्वमतनिरूपणाय परमतनिराकरणं करणीयमिति । इदञ्च गभीरेयं शास्त्रनीती रीतिः परमतनिराकृतौ गभीरैवावश्यकीति । प्रबन्धुरा खलु श्रीमदाचार्यप्रबन्धाः प्रकाशन्ते सैद्धान्तिकतत्त्वप्रकाशनपद्धतौ च्युतौ चाद्वैतप्रमुखसमयानाम् ॥

श्रीमदाचार्यीयानि हि प्रकरणानि करणानि तत्तच्छास्त्रैकदेशविषयविज्ञानस्य गृणीतानि विपश्चिदग्रणीभिराचार्यसाक्षाद्दर्शनभागधेयैः ध्येयैः धृतपाक्षिक वादभागैः श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यैः.

*वादादाय : प्रकरणस्फुलिङ्गास्तनवोऽप्यलम् ।*
*विपक्षकक्षं क्षिण्वन्ति मारुतेन त्वयेरिताः ॥ इति ।*

तत्र चान्यतममन्यतमोनिवर्तकं राराजीति प्रपञ्चमिथ्यात्वानुमानखण्डनं नाम, नामैवास्य विषयं विशदीकरोति ॥

दृश्यते खलु प्राचीनाद्वैतिप्रवरप्रबन्धेषु आनन्दबोधादिषु ''विमतं मिथ्या दृश्यत्वादित्यनुमानं, यत्र हि हैतवो दोषा दर्गीदृश्यन्ते निखिला अपीति, यच्चात्र प्रकरणे तूलीकृत्य भस्मसात्कृतं श्रीमदाचार्यैः ।

तथाचोक्तं प्रमाणलक्षणे भगवत्पादैरेव ''सर्व एते दृश्यत्वानुमाने द्रष्टव्याः'' इति । संक्षेपतस्त आक्षेपा व्युत्क्षिप्ता अत्राचार्यैः तथाहि । -

१. जगतोऽभावादाश्रयासिद्धिः (आश्रयासिद्धिः) ।

२. अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः (साध्याप्रसिद्धिः) ।

३. सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनता ।

४ दृश्यत्वाभावादसिद्धो हेतुः (हेत्वसिद्धिः) ।

५ अनिर्वचनीयासिद्धेरेव सपक्षाभावाद्विरुद्धः ।

६ आत्मनोऽपि दृश्यत्वादनैकान्तिकः ।

७ जगतोऽभावेऽनुमानस्याप्यभाव इति तर्कबाधितत्वेनानध्यवसितः (तर्कबाधः) ।

८ प्रत्यक्षविरुद्धत्वात् (प्रत्यक्षबाधः) ।

९. विश्वं सत्यं इत्यादिवाक्यविरुद्धत्वाच्च कालात्ययापदिष्टः (श्रुतिबाधः) ।

१० विमतं सत्यं दृश्यत्वादात्मवदित्यपि प्रयोज्यत्वात् प्रकरणसमः ।

११ विमतं सत्यं प्रमाणदृष्टत्वात् यथा आत्मा इति प्रयोगात् सप्रतिसाधनः। (सत्प्रतिपक्षः) ।

१२. शुक्तिरजतस्याप्यनिर्वचनीयताभावात् साध्यविकलो दृष्टान्तः ।

१३. उक्तप्रकारेण दृश्यत्वाभावात् साधनविकलश्च (साधनवैकल्यम्) ।

१४ प्रमाणविरुद्धत्वमुपाधिः । इति ।

उपपत्तिरेषां संव्युत्पादिता तट्टीकायां, टिप्पणीषु च ।

**वादावली** 1365-1388 श्रीमदाचार्यातिगंभीरवाक्यविशदीकृतौ कृतिनां कृतीनां श्रीमज्जयतीर्थानां 'टीकाकृत्पादा' इति विख्यातानां मध्य इयमेका वादसरणिः तरणिश्शास्त्रार्णवे वादावली नाम विमृशत्यमर्शं दृश्यत्वानुमानम् । मूलग्रन्थोक्तीर्विशदयति विपादयति च निर्मूलोक्तीः परं वादिनः परवादिनः ।

अत्रेमेऽधिकांशा उपलभ्यन्ते विमृष्टाः ।

१. मिथ्यात्वनिर्वचनम्

२. दृश्यत्वादिहेतुत्रयनिर्वचनम्

३. पराभिमतभावरूपाज्ञानप्रमाणानि ।

४. अंशित्वानुमानम्

५. नेहनानेत्यादि अद्वैतपराभिमतानां श्रुतीनां अर्थः ।

६. भेदस्य स्वरूपप्रमाणादि

७. विशेषः तत्कार्यादि

८. एवमादयः अनेके प्रासङ्गिका विषया मूलोक्तोपपादका दृश्यन्ते ।।. अस्या अपि त्रयंबकशास्त्रिविरचितः श्रुतिरत्नप्रकाश इति प्रकाशितः खण्डनाभासः । तस्योत्तरं विहितं अचिरादेव प्रकाश्यते इति निवेदयामः ।

**वादरत्नावली** (1390-1440) नाम न्यायामृतादौ सुगृहीतनामधेयैः **श्रीविष्णुदासाचार्यैः** कृतिः कृता या वादावलीप्रयुक्तयुक्तीः निरूपयन्ती विराजते।

**व्यासाराजतीर्थाः** - (शके -(१३७२-१४६१) (1460- 1539) षदवाक्य प्रमाणपारावारीणैः धुरीणैर्वादिदिग्गजविजये श्रीमदाचार्यटीकाचार्यगुरुसेवा समवाप्तवैदुष्यैः कुदूष्यदुर्वादिकृतकृतिनिराकृतिभिः कृतिभिः, गतिभिरितरेषां विदुषामधिपतिभिः वेदान्तसाम्राज्यस्य, सर्वतन्त्रस्वतन्त्रैः श्रीव्यासराजतीर्थैः व्यरचि हि व्यासत्रयं नाम श्रीव्यासत्रयीसुखतीर्थत्रयमतं यत्प्रौढिमा

मुनित्रयेऽन्यतमानकृत कृतभूरिपरिश्रमानेतान् तत्र भवतो,यत्र चोपलभ्यन्ते मूलग्रन्थोपरि परकृताक्षेपाणां सुस्पष्टं समाधानानि। इदं चाचार्यचरणनलिनसेवारूपं परं रूपमपरं वादसंपदो विधित्सवो विहितोत्सवा इमे स्वीयं श्रमं सफलममन्वत यदन्वेति न्यायामृते ग्रथितमपि ग्रन्थत्रयमिदं पद्यं

*''विक्षिप्तसंग्रात्क्वापि क्वाप्युक्तस्योपपादानात्।*
*अनुक्तकथनात्क्वापि सफलोऽयं श्रमो मम'' इति।*

तत्र हि श्रीमन्न्यायामृतं विदुषां निष्पक्षपातिनां श्रीहरिवायुगुरुभक्ति पवित्रितान्तःकरणानां अमृतमपि विषति दुर्वासनाकलुषितहृदां कुवादिनां न प्रीणयति प्रणववेद्यस्य श्रीरमाप्रणयिनः साम्यैषिणां द्वेषिणां चेत इति सश्रद्धातिशय मध्ययनपरंपरा अवगमयति दृश्वनी तन्निराकरणतत्परपरकीययत्नस्य। न खलु पथ्यं सर्वप्रियं जगति। न वाऽपथ्यं सर्वाप्रियम्।

निराक्रियन्ते हि परप्रक्रियाः साक्षात्परंपरया वा जगन्मिथ्यात्वानुकूलाः कुलंकुषं विचारिताः चतुर्षु परिच्छेदेषु अनितरसाधारणया भङ्ग्या भङगैः चतुर्दशाधिकशतसंख्याकैः।

प्रथमे परिच्छेदे हि मुख्यतया मिथ्यात्वपरिष्करणनिराकरणं, करणं दृश्यत्वादेस्तदकरणत्वं, विवरणमुपाध्याभाससाम्यादेः, निर्वचनं च प्रत्यक्षयोग्य सत्त्वस्य, विवरणं प्रत्यक्षस्येतरतोऽनेकधा प्राबल्यस्य, उपपादनं च पूर्वेणापि प्रत्यक्षेण परस्यागमस्य बाधे अपच्छेदन्यायावैषम्येणाविरोधस्य, २७ सत्प्रति पक्षानुमाननिरूपणं, दृश्यत्वादेर्मिथ्यात्वेऽसत्त्वेन तस्यासाधकत्वकथनं, विषयता विचारणं, श्रुतेर्जगन्मिथ्यात्वपरताखण्डनं, विवरणं च तदर्थानां, लक्षणप्रमाण विषयाश्रयाद्ययोगेन भावरूपाज्ञाननिराकरणं, निरूपणमहमर्थस्यात्मतायाः, कर्तृत्वदेहात्मैक्याध्यासनिराकरणं, अनिर्वाच्यत्वखण्डनं सत्तात्रैविध्यपराकरणं चेति सन्ति जगन्मिथ्यात्वपराणां अद्वैतिप्रक्रियाणां अयुक्तताप्रतिपादनार्थं सप्तषष्टि (६७) भङ्गाः।

द्वितीये च ब्रह्मविचारे, अखण्डार्थत्वे लक्षणप्रमाणनिराकरणं, ब्रह्मणो निर्गुणत्वनिराकारत्वादिनिराकरणं, तस्य पररीत्या ज्ञानत्वानन्दत्वादिभञ्जनं, आत्मनः उपादानत्व, स्वप्रकाशत्व, अवाच्यत्वादेः तिरस्करणं, भेदपञ्चके प्रत्यक्षादि प्रमाणसमर्थनं, जीवब्रह्मैक्यपरतयाभिमतश्रुतीनामर्थान्तरविवरणं, ऐक्यानुमान खण्डनं, जीवाणुत्वसमर्थनं चेति सन्ति त्रयस्त्रिंशत् (३३) विषयप्रभेदाः

तृतीये साधनविचारे परमते श्रवणादिविधीनामनुपपत्तिप्रदर्शनं, स्वमते साधनोपपत्तिविवरणं इत्येवं वर्तन्ते नव (९) विषयभेदाः ।

चतुर्थे च फलविचारे पराभिमतमोक्षस्वरूपनिराकरणं, जीवन्मुक्त्यादि प्रक्रियाखण्डनं, स्वमते मुक्तिस्वरूपस्य, तत्र ब्रह्मादीनां तारतम्यनिरूपणमित्येवं विषयपञ्चकं (५) दृश्यते ।।

समग्रमिदं समग्राद्वैतखण्डने समग्रं यत् समग्रहीत् खलु समग्रज्ञाचार्यसिद्धान्तप्रमेयानिति निश्चप्रचमपश्चिमं विपश्चित्प्रवराणाम् ।

**तद्व्याख्यानानि** - बहूनि सन्ति हि व्याख्यानानि पाठप्रवचननिरतैः प्राचीनपण्डितवर्यैः प्रणीतानि । कानिचन मुद्रितानि - कानिचिदमुद्रितानि मातृकारूपेणैव स्थितानि विद्यन्ते ।

**मुद्रितानि ।**

१. न्यायामृतकण्टकोद्धारः (साक्षिबाधपर्यन्त) (श्रीपाण्डुरङ्गी आनन्दभट्टारकैः विरचितः) ।

२. श्रीनिवासतीर्थीयम् (न्यायामृतप्रकाशः) ।

३. तरङ्गिणी (वैश्वनाथीयरामाचार्यरचिता)।

४. लघ्वामोदः । (श्रीविजयीन्द्रतीर्थविरचितः)।

५. न्यायामृतसौगन्ध्यम् (वनमालिमिश्रविरचितम्) ।

**अमुद्रितानि ।**

१ न्यायामृतकण्टकोद्धारः (आनन्दभट्टारकः) (शिष्टभागः)।

२. न्यायामृतसौगन्ध्यं (वनमालिमिश्रविरचितम्) - (शिष्टग्रन्थाः)

३. न्यायामृतमाधुरी - (मन्नारीकृष्णाचार्यः)

४. गुरुराजीयं -( पाण्डुरङ्गीकेशवाचार्यः)

५. रसकूलङ्कषा -( कुण्डलगिरीयआचार्यः)

६. लक्ष्मीनाथीया - ( लक्ष्मीनाथतीर्थाः ) (1643-1663)

७. न्यायामृतसौरभं ( वनमालिमिश्राः )

८. यादवेन्द्रीयम् - (यादवेन्द्रकृतम्)

९. न्यायामृतविवृतिः । ( गिरिसूरिकृता )

१०. न्यायामृतविवृतिः ( पाणिनिसूरिकृता )

११ काशी - (काशी तिम्मण्णाचार्याः) 1800- 1850)

१२ श्रीन्यायामृतमक्षिकाव्यजनम् - (श्री व्यासतत्वज्ञतीर्थाः)

**१. न्यायामृतकण्टकोद्धारः**।( 1536- 1605) । अयं ग्रन्थः प्रख्यातानां वाक्यार्थचन्द्रिकाप्रणेतॄणां श्रीविद्याधीशतीर्थश्रीचरणानां पूर्वाश्रमपितृपादैरानन्द भट्टारकैः पाण्डुरङ्गीवंशमूलपुरुषैः विरचितः । समग्राद्वैतसिद्धिखण्डनात्मकः । श्रीन्यायामृतव्याख्यानरूपश्च । क्वचित्क्वचित्तरङ्गिण्याशया अपि निरुध्यन्ते अत्र । तरङ्गिण्यादिषु अनुपलब्धानां मिथ्यात्वे विशेषतोऽनुमानादिखण्डनानां उपलब्धिः अस्मिन्निति विशेषः । श्री विजयीन्द्रतीर्थैः प्रणीत इति केचिद्भ्रान्ताः ।

**२. श्रीनिवासतीर्थीयम्** । (1590-1640) इदं वंशपल्लीकुलतिलकैः श्रीश्रीनिवासतीर्थैः श्रीमदानन्दतीर्थतीर्थनिमज्जनेन गृहस्थाश्रमैरपि उपपदीकृत श्रीराघवेन्द्रतीर्थदत्ततीर्थपदैः विरचितम् । आन्तमनुपलब्धमपि न्यायामृतार्थ विवरणे भृशं मन्दोपकारि इति विद्यार्थिजातं तदध्ययनशीलं नितरां स्मरतीत्ययं विशेषः ।

३. **तरङ्गिणी** (1540-1605) इयं तावत् विश्वनाथसूरीणां पुत्रैः श्रीरामाचार्यैः (व्यासरामाचार्यैः) अद्वैतकालानलग्रन्थकर्तॄणां श्रीनारायणाचार्याणां अनुजैः न्यायामृतपङ्क्तिव्याख्यानद्वारा अद्वैतसिद्धिखण्डनरूपा विराजते । इमे वेषान्तरं धृत्वा मधूसूदनसरस्वतीसकाशादेव अद्वैतसिद्धिमधीयाना एव तत्खण्डनं आरीरचन्निति श्रूयते। परमतखण्डनार्थं प्रवृत्ता अपि अनुल्लङ्घितमर्यादा अनुद्वेजिका गम्भीरेयमिति तदध्ययनाध्यापनचतुराणां विदुषां न विदगोचरम्।

४. **लघ्वामोदः** (1514-1594) चतुष्षष्टिकलाप्रवीणैः श्रीविजयीन्द्रतीर्थ श्रीपादैः विरचितः, संक्षेपतो मूलार्थविशदीकरणक्षमः विद्वन्मोदकरः । एतैरेव **गुर्वामोद इति मध्यमामोद इति** च न्यायामृतव्याख्यानद्वयं तथा **न्यामृतोदाहृतजैमिनिन्यायमाला इति, न्यायरत्नमाला इति** च न्यायामृत विषये स्वतन्त्रग्रन्थद्वयञ्च व्यरचि ।

अमुंद्रितेतरव्याख्यानेषु कानिचन नाममात्रेण श्रुतानि । उपलब्धान्यपि लिपिकृत्प्रमादबहुलानि नितरां विद्वज्जनसंशोधनमपेक्षन्ते ।

**अद्वैतसिद्धिः** । ( 1527- 1550)अयं ग्रन्थःन्यायामृतखण्डनाय प्रवृत्तः प्रायः न्यायामृतकाराणां समकालीनेन मधुसूदनसरस्वतीनामकेन बङ्गालपण्डितेन रचितः बहुप्रथितः । सिद्धित्रयानन्तरमुदितेयं चतुर्थी अद्वैतसिद्धिः अतियत्नेन रचिता वितण्डाप्रायेण वादेन वादे विजिगीषति । एवमेव हि कृतिः मधुसूदन सरस्वत्याः अद्वैतिषु अतिमान्यतामादधे, यदाभाणकं अद्वैतिषु प्रचलितम् ।

मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती ।
वेत्ति पारं सरस्वत्याः मधुसूदनसरस्वती इति ।।

किन्तु अत्र शास्त्रीयपरिभाषाद्युल्लङ्घ्य 'कुमतिः', 'रे मन्दमते', 'वराकः', 'मन्दबुद्धे', इत्यादि प्रयोगः सरस्वतीसेवासमुत्सुकानां विदुषां न मनो रञ्जयति । नापि सरस्वती सन्तुष्यति ।

**ब्रह्मानन्दीयम्** (1660-1700) लघुचन्द्रिकागुरुचन्द्रिकाख्यव्याख्याद्वय रूपस्यास्य प्रणेता गौडब्रह्मानन्दसरस्वतीनामकः विद्वान्। यः जगन्नाथसकुल इति प्रसिद्धः । अत्रापि तरङ्गिणीखण्डनव्याजेन स्वकोपाविष्करणं तथा दुष्प्रयोगे व्याख्येयग्रन्थानुसरणं च कृतं दृश्यते। अद्वैतसिद्धौ प्रयुक्ताया अयुक्तायाः युक्तेः कथंचित्समीचीनतां स्वशब्दव्युत्पत्ति प्रदर्शयन् संपिपादयिपत्ययं ब्रह्मानन्द सरस्वती। इदं न्यायामृतकलाधरे स्फुटम्।

**ब्रह्मानन्दीखण्डनानि।**

ब्रह्मानन्दीखण्डनार्थं प्रवृत्ता हि अनेकप्रबन्धाः माध्वीयाः । रसकूलङ्कषा, यादवेन्द्रीया, न्यायामृतव्यजनं, काशीयं, माधुरी, इत्यादिन्यायामृत व्याख्यानान्यपि ब्रह्मानन्दीयखण्डनायैव प्रवृत्तानि । तत्र श्री वनमालिमिश्रैः ( 1750-1800) कृते द्वे। सौगन्ध्यं सोरभं चेति। सौरभं तावत् गुरुचन्द्रिकखण्डनेन तरङ्गिणी स्पष्टं मण्डयति। (५) सौगन्ध्यं तु लघुचन्द्रिकां अनुवादपूर्वं निराकरोति।

१. **द्वैतद्युमणिः** । अयं हुलगीकुलभूषणैः पण्डितप्रकाण्डैः श्रीश्रीपत्याचार्यैः विरचितः । यद्यप्ययं श्रीमदाचार्यीयस्य तत्वोद्योतप्रकरणस्य व्याख्यानरूपः तथापि विस्तरशो अद्वैतसिद्धिब्रह्मानन्द्यावनूद्य बहुजटिलपरिष्कारपूर्वं खण्डयति ।।

२. **पञ्चग्रन्थि** (1790-1840) इदं न्यायामृताद्वैतसिद्धितरङ्गिणीब्रह्मानन्दी सौरभाख्यपञ्चग्रन्थानां विमर्शात्मकः श्रीआनप्पाचार्यप्रणीतः ।

३. **ब्रह्मानन्दीखण्डनम्** । नाम सातारी नारायणाचार्यरचितोऽपरोऽपि प्रबन्धोऽस्तीति श्रूयते।

४. **अद्वैतकुठारादयः** प्रबन्धाः एवंरूपाः अनेके उपलभ्यन्ते ।।

५. **न्यायभास्करो** नाम (1750-1800) लघुचन्द्रिकाखण्डनपरो ग्रन्थः विशिष्टाद्वैतसम्प्रदायानुसारिभिः अनन्ताळ्वार् महोदयैः प्रणीतः । अयं सोपाधिकत्वविचारपर्यन्तमेवाद्यत्वे उपलभ्यते । नैय्यायिकसरणिमनुसृत्य खण्डनप्रकारः नितरां विद्वच्चेतः चमत्कारार्णवे निमज्जयति ।।

तत्रत्युत्तराय चत्वारो ग्रन्थाः अद्वैतिभी रचिताः । तेषु ब्रह्मानन्दीयभावप्रकाशो नामान्यतमः पञ्चापगेशशास्त्रिकृतः कोचि महाराजेन प्रकाशितः । तस्य खण्डनं अस्मत्सकुलज्येष्ठैः पं श्रीबाळगारु श्रीनिवासाचार्यैः प्रणीतं अचिरादेव प्राकाश्यं नेष्यते।

**अर्वाचीनब्रह्मानन्दीखण्डनकर्तारः**

१. **श्रीविश्वप्रियमध्वनाथश्रीचरणाः** - भूवैकुण्ठायमाने श्रीश्रीरङ्गक्षेत्रे कृत निवासाः इमे , बाल्य एव चतुस्तन्त्रपारावारपारीणाः, अप्रतिग्रहवृत्त्या समुप स्मारितद्रोणाचार्याचरणाः, परसमयाटवीदहनपरदावानलप्रभगभीरशास्त्रविचा- रणाः , श्रीमध्वेशहयवदनपदपद्ममधुपायमानान्तःकरणाः , नैकप्रौढप्रबन्धसंवर्धित शास्त्रसंपदो न्यायामृतविपये **सत्पद्यभूषासाहस्री, पञ्चभङ्गीप्रकाशः, न्यायामृतकलाधरः**, इति कृतित्रयं समारीरचन्।

**सत्पद्यभूषासाहस्री** - इयं किल सदानन्दव्यासकृतस्य 'अद्वैतसिद्धिसिद्धान्तसार' ग्रन्थस्य खण्डनव्याजेन विध्वस्तसमग्राद्वैतसिद्धिब्रह्मानन्द्यादिपरसमया सहस्र श्लोकैः सङ्गृहीतन्यायामृतसारा अस्मत्कृतमञ्जूषाख्यव्याख्याविभूषिता वर्षद्वयात् भागद्वयेन भागशः प्रकाशिता, वरीवर्तीति सार्वजनीनम्।

**पञ्चभङ्गीप्रकाशः** - अयं विप्रतिपत्तिभङ्गमारभ्य हेतुत्रयभङ्गपर्यन्तं अद्वैत सिद्ध्यादीनां परामर्शनपरो राजते।

**श्रीन्यायामृतकलाधरः** । अयं अद्यात्र प्रकाश्यमानः प्राक् (1908 AD) श्री सि. एम्. पद्मनाभाचार्यैः प्रकाशितः । अस्मिन् हि सन्त्यष्टौ परिच्छेदाः ।१ पक्ष विशेषणकृत्यविचारः । २. साध्यविचारः । ३. हेतुविचारः । ४ सोपाधिकत्वविचारः । ५ सत्प्रतिपक्षितत्वविचारः । ६ आगमबाधविचारः । ७. अंशित्वानुमानविचारः । ८. भावरूपाज्ञानविचारः ।

समग्राद्वैतसिद्धिब्रह्मानन्दीग्रन्थौ यां प्रक्रियां आश्रित्य प्रवृत्तौ तस्या एव निराकरणेन तत्सर्वग्रन्था अपि खण्डिता भवेयुरित्युद्देशेन प्रवृत्तोऽयं ग्रन्थः ।

सन्ति इमे विशेषांशा अस्मिन्ग्रन्थे । प्रथमपरिच्छेदे पक्षतावच्छेदकाभिमतानां प्रत्येकं वैय्यर्थ्यमुपपादितम् । प्रतिवादिमाध्वरीत्या शुक्तिरूप्यस्यात्यन्तासत्त्वेनासद्विलक्षणत्वविशेषणेनैव तद्व्यावृत्तौ विशेषणान्तरस्यानावश्यकत्वात् । वादिरीत्या सिद्धसाधनस्यादूपणत्वाच्चेति । एवं बाधलक्षणाभावादसति बाधस्यैव वादिरीत्याऽभावादसद्विलक्षणत्वविशेषणं व्यर्थम् ।

द्वितीयपरिच्छेदे द्वितीयलक्षणविचारे स्वाप्नगजात्यन्ताभावस्य तात्विकत्वं स्वप्नदृष्टो गजात्यन्ताभाव इदानीमस्तीति बुद्धेर्भ्रमत्वप्रसङ्गेनोपपादितम् । स्वाप्नबाह्यगजात्यन्ताभावयोरैक्यं च । '' प्रतियोगिनिषेधयोरुभयोःनिषेधे न व्याहति : यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोरपि निषेधः'' इत्यत्र अद्वैतसिद्धावसाङ्गत्यं, तत्परिहाराय तद्व्याख्याने ब्रह्मानन्दीये आश्रितः क्लेशः सम्यक् प्रदर्श्यते । एवं प्रथमपञ्चमयोः, द्वितीयचतुर्थयोः भेदः चिन्त्य इति उपपादितम् । सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वाभावोक्तिः स्ववचन विरुद्धा इति दर्शितम् ।

तृतीयपरिच्छेदे हेतोः सत्यत्वमिथ्यात्वविकल्पेन तद्दूषणं, विषयविषयिभाव संबन्धस्यावश्यकत्वनिरुपणं विशेपः। चतुर्थपरिच्छेदे हेतुशरीरगतविशेषणस्य स्वरूपासिद्धिपरिहारकत्वेऽपि दोषाभावोपपादनम् । अधिष्ठानसमसत्ताकत्वस्य स्वजनकाज्ञानविषयावच्छेदकसमसत्ताकत्वमिति परिष्करणं विशेषः ।

पञ्चमे व्याप्यत्वासिद्धेर्दूषणत्वाभावनिरूपणं, मिथ्यात्वं नात्मान्यसर्ववृत्ति मिथ्यामात्रवृत्तित्वात् इत्यत्र मिथ्यात्वन्यूनवृत्तिरूपोपाधेः परोक्तस्य असद्विलक्षणत्वे साध्यव्यापकत्वभञ्जनं, आत्मभेदे व्यभिचारपरिहारक्रमः विशेषः । सप्तमे सन्दिग्धोपाधेरदूषणत्वोपपादनं विशेषः । अष्टमे विवरणानुमाने साध्यघटकविशेषणानां कृत्यविचारः । तद्दूषणं च सस्वारस्यं कृतं दृश्यते ।

अद्वैतसिद्धिगौडब्रह्मानन्दीग्रन्थयोरनुवादपुरःसरं तद्दोषप्रकाशनेन न्यायामृतोक्तयुक्तिमण्डनेन सत्यमयं कलाधरः सज्जनहृदयाह्लादकरः इति महदिदं आनन्दपदं बुभुत्सूनाम् ।

२. **श्रीश्रीनिवासाचार्याः जालिहाळ (हुनुगुन्द)** अस्मद्गुरवरा इमे पूज्याचार्याः अनन्तकृष्णशास्त्रिकृतस्य 'सौगन्ध्यविमर्श' नामकग्रन्थस्य निरसन मिषेण अद्वैतसिद्धिब्रह्मानन्दीविठलेशीयसिद्धिव्याख्यादि सङ्खण्ड्य स्वविरचिते **श्रीन्यायामृतार्णवे** स्वीयटिप्पणीयुते न्यायामृतसौगन्ध्यादीननितरसाधारण परिष्करणपुरःसरं मण्डयन्ति । तस्य प्रथमो भागः प्रकाशितः । अचिरादेव द्वितीयोऽपि भागः अस्मद्गुरुपुत्रैः संपाद्य प्रकाशिष्यते ।

*न्यायामृतार्णवपरीक्षा (?)* नाम ग्रन्थः अनन्तकृष्णशास्त्रिप्रणीत इति नामतो निर्दिष्टः प्रकाशित इति न्यायचन्द्रिकाभूमिकायां उक्तं दृश्यते । परन्तु बहुधा बहुदा गवेषणेपि नोपलब्धः। तत् केवलं प्रतारणमात्रमिति भावयामः । प्रार्थ्यन्ते च ते ये तद्ग्रन्थभाज उपकर्तुं यद्यस्ति तत् प्रेषणेन ।

श्रीन्यायामृतपाठप्रवचननिरतानां विदुषां अयमत्यन्तं समादरणीयोऽयं ग्रन्थः श्रीन्यायामृतकलाधरोऽधुना द्वितीयवारं मुद्राप्य प्रकाश्यते, श्रीश्रीचरणानां ६३तमे आराधनामहोत्सवे तत्पुण्यस्मरणसन्दर्भे इतीदं श्रीश्रीचरणानां अन्तर्यामिणः श्रीभारतीरमणमुख्यप्राणान्तर्गतलक्ष्मीहयवदनस्वामिनः प्रीतिकरी सेवा इति मन्यामहे । अस्य ग्रन्थस्य मुद्रणाय अनुमतिं दत्तवते श्री सि.जे राजाचार्य महोदयाय सप्रेमाभिनन्दनानि विधास्यामः ।

अनुग्रहाशीर्भिः संवर्धितास्मत्कान् परमपूज्य श्रीजालिहाळाचार्यान्, अस्मत्पितृचरणान् चाभिवन्द्य सकल गुरुपरंपरां च पौनःपुन्येन नमस्कृत्य एतद्ग्रन्थकर्तृ १००८ श्री श्रीविश्वप्रियमध्वनाथश्रीचरणानां अनुग्रहं आशिषश्च प्रार्थयमानः श्रीमन्मध्वेशे हयवदने इदमर्पयन् विरमामि विस्तरतः। ॐ

श्रीमुखसंवत्सरीय
पुष्यकृष्णपञ्चमी

विद्वद्वशवदः
**श्रीनिवासाचार्यः ताम्रपर्णी**

श्रीः

श्रीहयवदन मध्वेश पाहि

" व्यवहारभिदाऽपि गुरोर्जगतां
न तु चित्तगता स हि चोद्यपरम् "
इति द्वादशस्तोत्रे तृतीयाध्याये सप्तमः श्लोकः

अस्य व्याख्यानरूपोऽयं
न्यायामृतकलाधरो ग्रन्थः।

न्ययामृतार्यसेवायां महान्तः सन्ति मत्कृतिः ।
कश्यपस्य मुनेर्यागे *वालखिल्येन्धनं यथा।। ५ ।।

अद्वैतवादिनो हि "ब्रह्मप्रमान्याबाध्यत्वे सति असद्विलक्षणत्वे सति, ब्रह्मान्यद्विश्वं, मिथ्या दृश्यत्वात् ,जडत्वात् ,परिच्छिन्नत्वात् शुक्ति रूप्यवत् " इत्यनुमानबलाद्विश्वस्य मिथ्यात्वं साधयितुमुद्यताः । अत्रा नुमाने पक्षतावच्छेदकशरीरप्रविष्टविशेषणानां कृत्यविचारः क्रियते ।

## अद्वैतसिद्धौ पक्षविशेषणपरिष्कारः

अद्वैतसिद्धावुक्तम् 'अत्र च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेति मते शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वं पक्षविशेषणम् । यदि पुनः पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धिरुद्देश्या तदेकदेशे साध्यसिद्धावपि सिद्धसाधनाभावात् तद्वारकं विशेषणमनुपादेयम् । इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च बाधवारणयादरणीयमेव "इति ।

## ब्रह्मप्रमान्याबाध्यत्वविशेषणम्

अस्य विशेषणस्य सार्थक्यं न ज्ञायते । पक्षतावच्छेदकावच्छेदेन सिर्द्धि प्रति सामानाधिकरण्येन सिद्धेरदूषणत्वात् । २. शुक्तिरूप्ये सिद्धसाधनावकाशस्यैवाभावात् । ३. सिद्धसाधनस्याङ्गीकारेऽप्यनेन विशेषणेनातत्परिहारात् ।

---

* वालखिल्यऋषयोऽङ्गुष्ठमात्रपरिमाणाः श्रमतो समिद्रेणूनिन्धनत्वेन समावहन् समुद्रे सेतुबन्धनाय वाळुकमुष्टिवत् (भारत)

४. विशेषणोपादाने आश्रयासिद्धेः । तथाहि पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरनुमितिं प्रत्यविरोधित्वात् प्रकृते शुक्तिरूप्ये पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिरूपतया तादृशसिद्धसाधनत्वस्यादूषणत्वं प्रसिद्धम् । एतदभ्युपगतमद्वैतसिद्धौ । तद्धर्मधर्मितावच्छेदककानुमितित्वावच्छिन्नं प्रति तद्धर्मिकसिद्धिसामान्यस्य विरोधितावादिनां प्राचां मतरीत्या तु शुक्तिरूप्ये सिद्धसाधनवारणाय यत्किञ्चिद्विशेषणमादरणीयमिति वक्तुं शक्यत्वेऽपि [1]प्रकृतविशेषणमसार्थकम् ।

किञ्च शुक्तिरूप्ये सिद्धसाधनस्य नैवावकाशः । तथा हि प्रतिवादिरीत्या सिद्धसाधनवारणस्यैव सिद्धसाधनवारकविशेषणप्रयोजनत्वात् वादिरीत्या सिद्धसाधनस्यादूषणत्वात् प्रकृते शुक्तिरूप्यस्यासत्त्वतया प्रतिवाद्यभ्युपगतत्वेनासद्विलक्षणत्वरूपपक्षतावच्छेदकानाक्रान्तत्वेनैव शुक्तिरूप्ये सिद्धसाधनानवकाशात् ब्रह्मप्रमान्याबाध्येति विशेषणं व्यर्थमेव ॥

न च [2]तार्किकादिरीत्या सिद्धसाधनवारणाय विशेषणमिति वाच्यम् । सदसद्विलक्षणत्वरूपमिथ्यात्वस्य तैरनभ्युपगमात् तादृशसाध्यसाधने न सिद्धसाधनावकाशः । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं

---

[1]ब्रह्मप्रमान्याबाध्यत्वविशेषणोपादानेऽपि सिद्धसाधनापरिहारस्य वक्ष्यमाणत्वादिति शेषः । वस्तुतस्तु क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानानामुच्छेदापत्त्या प्राचीनमतमनुपादेयमेव ।

[2]आदिपदेन भट्टभास्करः ग्राह्यः । ननु सदसद्विलक्षणत्वरूपमिथ्यात्वस्य भट्टभास्करमतानुयायिना शुक्तिरूप्येऽङ्गीकारात्सिद्धसाधनं स्यादेव । न च तेन सत्यं रजतं जायते इति कण्ठरवेणोक्तत्वात् कथमेवमिति वाच्यम् । यतः तद्वाक्यघटकसत्यपदबोध्यं सत्त्वं न त्रिकालाबाध्यत्वरूपं न वा कालसंबन्धित्वम् ।

**मिथ्यात्वमिति पक्षेऽपि न सिद्धसाधनावकाशः। तार्किका रजतं देशान्तरे विद्यमानं मन्यन्ते । प्रतिपन्नोपाधौ सर्वत्र त्रैकालिकनिषेध प्रतियोगित्वरूपं मिथ्यात्वमिति ह्यद्वैतिहृदयम् । तस्मात् ब्रह्मप्रमान्याबाध्यत्वेति विशेषणमनुपादेयमेव।**

**विशेषणानुपादाने सिद्धसाधनावकाश इति यथाकथंचित् वैय्यात्यान्निरूपणेऽपि न प्रकृतविशेषणोपादानेन फलितो मनोरथः। ब्रह्मप्रमान्या बाध्यत्वविशेषणेन सिद्धसाधनस्यापरिहृतेः । ब्रह्मण्यरोपितासत्यत्वे ब्रह्म न सत्यमिति प्रतीतिसिद्धे ब्रह्म सत्यमिति प्रमानिवर्त्ये सिद्धसाधनम् । सप्रकारकज्ञानाबाध्यत्वनिवेशान्न सिद्धसाधनमित्युक्तेऽपि प्रतिपन्नो पाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्य ब्रह्मज्ञानेतरा बाध्यत्वरूपपक्षतावच्छेदकाक्रान्ते वाद्यभ्युगते देहात्मैक्ये चरम साक्षात्काराव्यवहितपूर्वकालीनप्रातिभासिके[1] ब्रह्मण्यारोपित-**

---

आद्ये नेदं रजतमिति वाधानुपपत्तिः । द्वितीये विधेयकोटावपि काल संवन्धित्वभानात् घटो नीलघटः इति बोधानापत्तिः। अतः असद्विलक्षणत्वमेव तत्र सत्त्वमङ्गीकार्यम्। तथा च न तदुक्तिविरोध इति चेन्मैवम्। सत्यपदेनास द्वैलक्षण्योक्तावपि तेन सद्वैलक्षण्यानङ्गीकारात् शुक्तौ प्रतीयमानस्य सत्यत्ववादिनां बाधानुपपत्तेरपरिहार्यत्वाच्च। अथवा तैः देशान्तरे सतस्तत्रैव तात्कालिकस्य सतो वा रजतस्य भेदस्य वा शुक्तौ बाधज्ञानेन गृह्यमाणत्वाङ्गीकारात्।

[1]प्रातिभासिक इति । यद्यपि सप्रकारकज्ञानबाध्यत्वयोग्यत्वाभावविवक्षणेन सिद्धसाधनं शक्यवारणं तथापि अस्य चरमसाक्षात्काराव्यवहितप्राक्कालीन शुक्तिरूप्यस्य मूलाविद्याकार्यत्वेन सप्रकारकज्ञानबाध्यत्वयोग्यत्वस्याप्यभावेन सिद्धसाधनतादवस्थ्यात्। न हि तदा पल्लवाज्ञानं मूलाज्ञाने विलयमर्हति। येन सप्रकारकज्ञानबाध्यं स्यात् । आश्रयासिद्धेर्वक्ष्यमाणत्वाच्च । एतेन पल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वं पक्षतावच्छेदके निवेशनीयमिति गुरुचन्द्रिकोक्तमपि निरस्तम्।

क्षणिकत्वादौ [1] च सिद्धसाधनं दुर्वारम् ।

किञ्च ब्रह्मप्रमान्याबाध्यत्वेतिविशेषणस्य क्वचित् पक्षतावच्छेदकाक्रान्तेऽभावेनाश्रयासिद्धिः । तथा हि अहं ब्रह्म घटो विनाशीत्यद्वैतज्ञानस्य प्रपञ्चबाधकत्वे बाधकाभावेन ब्रह्मप्रमान्याबाध्यत्वस्य प्रपञ्चेऽभावेन आश्रयासिद्धिः । ब्रह्मप्रमेत्यस्य ब्रह्मान्याविषयकब्रह्मप्रमेत्यर्थः । अहं ब्रह्म घटो विनाशी इति ज्ञानस्य ब्रह्मान्यविषयकप्रमात्वात् नाश्रयासिद्धिरिति वक्तुं शक्यते । घटादिकतिपयपदार्थसमुदाये अयमेव पदार्थः प्रपञ्च इति भ्रमसिद्धे अयमेव प्रपञ्चो नेति प्रमाबाध्ये ब्रह्मप्रमान्याबाध्यत्वाभावेन आश्रयासिद्धिः ॥

## असद्विलक्षणत्वविशेषणम् ।

"इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि बाधवारणायादरणीय'मित्यद्वैतसिद्धौ । असति बाधवारणायासद्विलक्षणत्वमिति न संभवति । कुत इत्युक्ते पक्षविशेष्यकसाध्यप्रकारकानुमितिजनकाज्ञाननाशकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वरूपबाधलक्षणस्य असद्विशेष्यकानुमितिजनकाज्ञानानभ्युपगमेन बाधानवकाशात् विशेषणं व्यर्थम् । पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वरूपबाधलक्षण संभवादिति शक्यं समाधानम् । परन्तु प्रातिभासिकवह्न्यभाव वत्पर्वतादेः बाधत्ववारणाय [2]स्वसमानसत्ताकयद्रूपावच्छिन्नत्वस्य बाधलक्षणे निवेशनीयतया असति कस्या अपि सत्ताया अभावेनासति

---

[1] शुद्धारोपितक्षणिकत्वादौ इत्यर्थः । अपरब्रह्मणि तत्सद्भावसंभवात् आरोपितत्वायोगात् । तच्च विना शुद्धज्ञानं न बाध्यते । [2] अत्र केचित् प्रतियोग्यन्यूनसत्ताकत्वघटितं बाधलक्षणमिच्छन्ति ।तदयुक्तम्। ब्रह्म असदित्यादौ असद्भिन्नब्रह्मादिबाधे अव्याप्त्यापत्तेः ।

बाधानावकाशात् असद्विलक्षणत्वविशेषणं व्यर्थमेव ।

किञ्च सामानाधिकरण्यप्रतीतौ सर्वत्र भेदाभेदोभयवादिनां मते असति सद्विलक्षणभेदस्य अभेदस्य च प्राप्त्या सद्विलक्षणविलक्षणत्व रूपासद्विलक्षणत्वस्यासत्यपि संभवेनासति बाधावारणादसद्विलक्षण त्वरूपविशेषणं व्यर्थम् ।

## ब्रह्मान्यत्वविशेषणम् ।

ब्रह्मणि बाधवारणाय ब्रह्मान्यत्वविशेषणमपि व्यर्थम् । ब्रह्मणो निधर्मकत्वेन असद्विलक्षणत्वरूपपक्षतावच्छेदकानाक्रान्तत्वात् बाधान वकाशः । किञ्च घटत्वेन ब्रह्मभेदमादाय ब्रह्मणि बाधश्च । ब्रह्मत्वेन ब्रह्मभेदनिवेशेन बाधवारणे तु ब्रह्मत्वेन घटभेदमादाय ब्रह्मणि बाधः । ब्रह्मत्वावच्छिन्नब्रह्मनिष्ठप्रतियोगिताकभेदनिवेशेन बाधवारणे च ब्रह्मत्व घटत्वाभ्यां ब्रह्मनिष्ठप्रतियोगिताकब्रह्मभेदमादाय ब्रह्मणि बाधः । ब्रह्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदनिवेशे च निरव च्छिन्नेत्यत्रापि अवच्छिन्नत्वघटएतदुभयभेदमादाय पूर्वोक्तरीत्या बाध एव । निर्धर्मके ब्रह्मणि अभावप्रतियोगित्वरूपधर्माभावादिति प्रथम परिच्छेदे अद्वैतसिद्धावुक्तरीत्या ब्रह्मनिष्ठप्रतियोगिताया अभावेन ब्रह्म निष्ठप्रतियोगिताकभेदवत्त्वरूपब्रह्मान्यत्वस्य निवेशयितुमशक्यत्वाच्च। तथाच पक्षतावच्छेदकीभूतविशेषणत्रयं व्यर्थम् ।

# द्वितीयः परिच्छेदः

## अथ साध्यविचार:

मिथ्यात्वं नाम सदसद्वैलक्षण्यं, प्रतिपन्नोपाधौ सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं, ज्ञाननिवर्त्यत्वं, स्वात्यन्ताभावाधिकरणे

एव प्रतीयमानत्वं, सद्विविक्तत्वं इति पञ्चधा परिष्कृतमद्वैतिभिः । सद्विविक्तत्वमिति पक्षे असद्व्यावृत्त्यर्थं सत्त्वेन प्रतीयमानत्वविशेषणं देयमित्यङ्गीकृतत्वात् पञ्चमपक्षस्य प्रथमात्कथं वैलक्षण्यमिति चिन्त्यम्। किञ्च द्वितीयपक्षस्य चतुर्थाद्वैलक्षण्यमपि चिन्त्यम् ।

मिथ्यात्वं यदि सद्विलक्षणत्वासद्विलक्षणत्वोभयरूपं[1] तर्हि तयोः सत्त्वासत्त्वोभयरूपतया सत्त्वासत्त्वयोश्च बौद्धधिक्कारे सत्त्वासत्त्व योर्विरोधवत्तदभावयोरपि विरोधः इत्युदयनाचार्योक्तरीत्या परस्पर विरहव्यापकतया विरुद्धत्वेन एकानुमितिविधेयत्वं न संभवति । अनुमितेश्चानाहार्यत्वनियमात्

अद्वैतसिद्धावुक्तम् ।"न च सत्त्वासत्त्वयोः परस्परविरहव्यापकत्वं संभवति । सत्त्वं हि त्रिकालाबाध्यत्वम् । असत्त्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वम् । तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमिति साध्यं पर्यवसितम् । तथा च सत्त्वासत्त्वयोः परस्परविरहव्यापकत्वरूपविरोधाभावेन एकानु मितिविधेयत्वं संभवति ।

अत्र प्रसिद्धं सत्त्वासत्त्वशब्दार्थं विहाय सत्त्वमित्यत्र त्रिकाला बाध्यत्वं, असत्त्वमित्यत्र सत्त्वेन प्रतीत्यनर्हत्वमिति शब्दार्थमादाय वैवक्षिकपारिभाषिकसत्त्वासत्त्ववैलक्षण्यसाधने पुरुषादावपि सर्वत्र पुरुषत्वापुरुषत्वयोः वैवक्षिकयोः साधनसंभवेन अर्थान्तरता ।

निर्धर्मकब्रह्मणस्सत्त्वाभावेऽपि सद्रूपत्ववत् प्रपञ्चस्य सत्त्वा

---

[1]उभयरूपमिति । केचित् सदसद्विलक्षणत्वपरिष्कारघटकं सत्त्वं स्वप्रकारकधीविशेष्यताव्यापकाभावाप्रतियोगित्वमिति मन्यन्ते । द्वितीयमिथ्यात्व परिष्कारेणास्य कथं भेद इति तु चिन्त्यः ।

भावेऽपि सद्रूपत्वेन अमिथ्यात्वोपपत्त्या अर्थान्तरमिति न्यायामृतोक्त मनूद्य अद्वैतसिद्धौ "एकेनैव सर्वानुगतेन सत्त्वेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत्प्रपञ्चस्य सत्त्वाभावकल्पने मानाभावादनुगत व्यवहाराभाव प्रसङ्गाच्च "इत्युक्तम् ।

तत्र विश्वसत्यतासाधकविश्वं सत्यमित्यादिप्रमाणबलेन प्रपञ्चस्य सत्स्वभावकल्पनोपपत्तेर्न तदुक्तं सङ्गतम् । रूपी घटः रूपी पुरुषः दण्डी देवदत्तः दण्डी यज्ञदत्तः चलति घटः चलति पटः सत् सामान्यं सन् विशेषः इत्याद्यनुगतव्यवहारेषु निमित्तभूतस्वभावविशेषैरेवानुगत व्यवहारोपपत्तेरनुगतसत्ताजातिकल्पनं व्यर्थमेव । अनुगतव्यवहारस्य च सादृश्यनिमित्तकत्वोपपत्तेः । " इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते " इत्यनुव्याख्यानोक्तरीत्या अनुगतसत्तायाः प्रतिवादिभिरनङ्गीकाराच्च ।

अद्वैतसिद्धौ " सत्त्वासत्त्वाभाववत्त्वरूपं विशिष्टं साध्यमित्यपि साधु " इत्युक्त्वा " न च निर्धर्मकत्वात् ब्रह्मणः सत्त्वासत्त्वरूपधर्म द्वयशून्यत्वेन तत्रातिव्याप्तिः । सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावानधि करणत्वात् निर्धर्मकत्वेनैव अभावरूपधर्मानधिकरणत्वाच्च " इत्युक्तम् ।

तत्र विश्वसत्यताग्राहकप्रत्यक्षादिप्रमाणैर्विश्वस्य सत्यत्वात् सत्त्वाभाववत्त्वे सति असत्त्वात्यन्ताभाववत्त्वरूपं साध्यं नास्तीति प्रपञ्चे बाधः ।

किञ्च निर्धर्मकत्वेन ब्रह्मण्यभावरूपस्यापि धर्मस्यानङ्गीकारे असत्त्वानधिकरणत्वस्य ब्रह्मणि निर्धर्मकत्वेन अभावात् तेनैव विशेष- णेन ब्रह्मण्यतिव्याप्तिवारणसंभवेन सत्त्वानधिकरणत्वविशेषणं

मिथ्यात्वलक्षणे व्यर्थम् । तथा च भवदीयवचनविरोधश्च ।।

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वं इति द्वितीय परिष्कारस्य स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वं फलितम् । स्वं शुक्तिरूप्यं । स्वप्रकारका या धीः इदं रूप्यमिति धीः । तादृशधीविशेष्यता शुक्तिनिष्ठा । तद्व्यापकीभूतो योऽभावः = रूप्याभावः तत्प्रतियोगित्वं शुक्तिरूप्ये वर्तत इति शुक्तिरूप्यदृष्टान्ते साध्यसाधनम् ।।

अद्वैतसिद्धावुक्तम् "न च स एवाधस्तादिति श्रुत्या प्रतिपन्ने देशकालाद्युपाधौ परमार्थतो ब्रह्मणोऽभावात् तत्रातिव्याप्तिरिति वाच्यम् । अधिकरणातिरिक्ताभावानभ्युपगमेन उक्तमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मरूपस्याविरोधात् । एतेन स्वप्रकाशत्वाद्यपि व्याख्यातम् । परप्रकाश्यत्वाभावो हि स्वप्रकाशत्वम् । कालपरिच्छेदाभावो विभुत्वम् । वस्तुपरिच्छेदाभावः पूर्णत्वमित्यादि । तथा च भावरूपधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावतया न काप्यनुपपत्तिः "इत्युक्तम् ।

तत्र अभावरूपधर्मस्य ब्रह्मणि तादात्म्येनाभ्युपगमे त्रैकालिकनिषेधाप्रतियोगित्वाभावरूपस्य ब्रह्मणि संभवेन ब्रह्मणोऽपि मिथ्यात्वं दुर्वारम् ।

किञ्चाद्वैतसिद्धौ अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति चेन्न इत्याशङ्क्य "तथा च येन संबन्धविशेषेण यदधिकरणताप्रतीतिः यत्र भवितुमर्हति तेनैव संबन्धविशेषेण तेनैवावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यत्वं इत्युक्ते क्व सिद्धसाधन'मिति समाहितम् ।

तत्र घटवति भूतले घटत्वेन घटत्वात्यन्ताभावासंभवेऽपि घटत्वपटत्वोभयरूपेण घटात्यन्ताभावसंभवेन प्रतिपन्नोपाधौ घटवति भूतले विद्यमानो योऽत्यन्ताभावः घटत्वपटत्वाभ्यां घटात्यन्ताभावः तत्प्रतियोगित्वं घटस्य संभवतीति सिद्धसाधनम् । तथा संयोगेन घटवति भूतले संयोगसमवायाभ्यां घटात्यन्ताभावसंभवेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं घटस्य संभवत्येवेति सिद्धसाधनमर्थान्तरं वा ।

प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्विकत्वे अद्वैतहानिः । प्रातिभासिकत्वे प्रतियोगिनस्सत्त्वेन सिद्धसाधनम् । व्यावहारिकत्वे तस्य बाध्यत्वेन तात्विकसत्त्वाविरोधितया अर्थान्तरमिति न्यायामृते उक्तम् । एतदनूद्य अद्वैतसिद्धौ "निषेधस्य प्रपञ्चनिषेधाधिकरणीभूत ब्रह्माभिन्नत्वात् तस्य तात्विकत्वेऽपि नाद्वैतहानिः" इत्यभिहितम् ।

अत्रेदं वक्तव्यम् । मिथ्यात्वस्य ब्रह्मस्वरूपत्वे विमतं मिथ्या इत्यनुमाने सिद्धसाधनम् । प्रपञ्चे ब्रह्मसंबन्धत्वस्य सिद्धत्वात् । निषेधसामान्यस्य ब्रह्मस्वरूपत्वे निषेधनिषेधस्यापि निषेधत्वेन ब्रह्मस्वरूपत्वापत्त्या तदात्मकघटादेरपि ब्रह्मस्वरूपत्वापत्तिः । तादात्म्यनिषेधत्वेन भेदस्यापि ब्रह्मस्वरूपत्वापत्तिश्चेति ॥

अतात्विकपक्षमाश्रित्य अद्वैतसिद्धौ तावदुक्तम् । "अतात्विक एवायं निषेधः । अतात्विकत्वेऽपि न प्रातिभासिकः किन्तु व्यावहारिकः । न च तर्हि निषेधस्य बाध्यत्वेन तात्विकसत्त्वाविरोधित्वादर्थान्तरमिति वाच्यम् । स्वप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात् " इति । बाध दर्शनादित्यस्य मिथ्यात्वव्यवहारदर्शनादित्यर्थ उक्तो ब्रह्मानन्दीये ।

स्वप्नार्थस्य, स्वाप्नगजादेः, स्वाप्ननिषेधेन स्वाप्नप्रतीतगजात्यन्ताभावेन, बाधः मिथ्यात्वं दृश्यते इति व्याख्यातम् ।

तथाच निषेधनिषेधप्रतियोगिनोस्तात्विकत्वं नास्तीत्युक्तं भवति । तन्न । स्वप्नेऽपि गजात्यन्ताभावस्य तात्विकत्वात् । अन्यथा अत्रेदानीं स्वप्नदृष्टो गजात्यन्ताभावोऽस्तीति बुद्धेर्भ्रमत्वप्रसङ्गः । न च स्वाप्न गजात्यन्ताभावस्य बाह्येन्द्रियागोचरस्य कथं बाह्येन्द्रियगोचरेण इदानीं तनगजाभावेन अभेद इति शङ्क्यम् । सहकारिवशेन स्वप्नदृष्टस्यापि चरमधातुविसर्गवत् गजाद्यभावस्य बाह्येन्द्रियगोचरत्वोपपत्तेः । अन्यथा स्वाप्नकामिनी संभोगादिना जन्यचरमधातुविसर्गादेरपि बाह्येन्द्रिय गोचरत्वाभावापातः । अत एवोक्तं " न स्वप्नेपि द्वयं मिथ्या तत्रैकं सत्यमेव हि भावाभावावुभौ तत्र कथं मिथ्या भविष्यतः " इत्यनुव्याख्याने ।

अद्वैतसिद्धौ 'निषेधस्य बाध्यत्वं न पारमार्थिकत्वाविरोधित्वे तन्त्रम्। किन्तु प्रतियोग्यपेक्षया निषेधस्याभावस्य न्यूनसत्ताकत्वं तन्त्रम् । प्रकृते तु तुल्यसत्ताकत्वात् विरोधित्वमेव "इत्याद्युक्त्वा "न च निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिरिति वाच्यम् । यत्र प्रतियोगिनिषेधयोरुभयोरपि निषेधः तत्र न प्रतियोगिसत्त्वं यथा ध्वंससमये प्रागभावप्रतियोगिनोरुभयोरपि निषेधः । एवञ्च प्रकृतेपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य निषेधस्य न बाधनात् निषेधस्य बाध्यत्वेऽपि प्रपञ्चस्य न तात्विकत्वम् । उभयोरपि निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तुल्यत्वात् "इत्युक्तम् ।

ब्रह्मानन्दीये (पुट १७६) तु उदाहृतग्रन्थे प्रागभावशब्दस्य प्रसिद्धार्थग्रहणे असाङ्गत्यभिया प्रागभावप्रतियोगिनोरिति

प्रतीकमुपादाय " प्राक्= (अ)ज्ञातयोरभावप्रतियोगिनोरित्यर्थः । निषेधधीपूर्वमारोपितयोरत्यन्ताभावप्रतियोगिनोरिति यावत् । तथा च घटादेर्ध्वंसकाले कपाले प्राचीनतार्किकादिमते तत्र घटात्यन्ताभावस्य व्यावहारिकस्यास्वीकारेण आरोपासंभवात् इदं कपालं घटवन्न वेति संशयरूपस्यारोपस्योत्तरं अत्र च घटः तदत्यन्ताभावश्च द्वौ न स्तः इति निषेधेऽपि यथा घटस्य नाऽमिथ्यात्वं निश्चीयते किन्तु तयोः घटतदत्यन्ताभावयोः परस्परात्मकान्यूनसत्ताकात्यन्ताभावघटितं मिथ्यात्वमेव निश्चीयते इति दृष्टान्तार्थः । यथाश्रुतं तु प्रागभावेत्यसङ्गतम् । अत्यन्ताभावात्मकनिषेधस्य निषेधे प्रतियोगिसत्त्वापत्तेः पूर्वमुक्तत्वेन प्रागभावात्मकनिषेधस्य निषेधे प्रतियोग्यसत्त्वदृष्टान्तेन तस्याः खण्डनस्यासङ्गतेरिति ध्येयम् " इत्युक्तम् । अत्र मूलकारवचनं तस्यातिक्लिष्टव्याख्यानं च हासं जनयति । निषेधस्य बाध्यत्वमित्यारभ्य अन्यूनसत्ताकत्वमित्यन्तं सत्तात्रैविध्य सिद्ध्युत्तरं निश्चेयम् । सत्तात्रैविध्यं तु साधकमानाभावेन न सिद्धमेव । अत एवोक्तं " सत्त्रैविध्यं तु मानेन सिद्ध्येत्केनेति पृच्छ्यते । तस्याप्युक्तप्रकारेण नैव सिद्धिः कथंचन "इत्यनुव्याख्याने ।

" तद्घटध्वंसकाले प्रागभावकाले च तद्घटसमवायिनि (कपाले) समवायावच्छिन्नतद्घटात्यन्ताभावो नाभ्युपेयते । तद्घटो नास्तीति बुद्धेस्तद्घटविरोधिप्रागभावाद्यवगाहित्वात् " इति ब्रह्मानन्दीये विश्व सत्यत्वानुमानभङ्गे उक्तरीत्या घटध्वंससमये घटो नास्तीति बुद्धेः घट ध्वंसविषयकत्वेन ध्वंसप्रागाभावाधिकरणे नात्यन्ताभावः इति निय मेनैव घटात्यन्ताभावनिषेधः । तादृशनियमानङ्गीकारपक्षे कपाले घटात्यन्ताभावो नास्तीतिबुद्धेः प्रमात्वं नास्त्येव निषेधस्य निषेधे प्रतियोगिसत्त्वमिति नियमस्य ध्वंसप्रागभावाधिकरणे नात्यान्ताभावः

इति नियमविषयान्यपरत्वात् घटध्वंसकाले घटः घटात्यन्ताभावश्च नास्तीति निषेधनिषेधे प्रथमनिषेधप्रतियोग्यसत्त्वोपपादनमसङ्गतमेव । कपाले घटस्य घटात्यन्ताभावस्य च विरोधिभूतघटध्वंसस्य सत्त्वात् । एतदस्वरसादेव वा ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव इति प्राचां पक्षं परित्यज्य नवीनैः भूतलादाविव कपाले घटो नास्तीत्यत्रापि अत्यन्ताभाव एव विषय इति स्वीकृतम् ।

प्रकृते च तथाविधविरोधिसद्भावो नास्ति । दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः " स एवाधस्ताज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं " इत्यादिप्रमाणैः ब्रह्मणि प्रपञ्चे च यद्दृश्यत्वं तत् प्रपञ्चसत्त्वस्य सत्त्वाभावस्य च न विरोधि । प्राचां पक्षेऽपि तदत्यन्ताभावाधिकरणत्वं यत्र तत्र अत्यन्ताभावविरोधितत्कत्वतत्प्रतियोगिकप्रागभावतत्प्रति योगिकध्वंसानां अन्यतमवत्त्वं इति नियमस्याभ्युपगमात् प्रकृते प्रपञ्चात्यन्ताभावरूपस्य मिथ्यात्वस्याभावे तदधिकरणे मिथ्यात्व विरोधिनां मध्ये अन्यतमस्य प्रपञ्चस्य वा तत्प्रागभावस्य वा तत्प्रध्वंसस्य वा अङ्गीकार्यत्वापत्त्या " मिथ्यात्वस्य च मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् । मिथ्यात्वस्य च सत्यत्वे सदद्वैतमतक्षतिः " इति न्यायामृतोक्तमापादनं युक्तमेव ॥

ज्ञाननिवर्त्यत्वं मिथ्यात्वमिति तृतीयपक्षेऽपि ज्ञाननिष्ठजनकता निरूपितजन्यताशालिनाशप्रतियोगित्वरूपं ज्ञाननिवर्त्यत्वं चेत् उत्तरज्ञाननिवर्त्यपूर्वज्ञाने अतिव्याप्तिः । एतद्वारणाय वक्तव्यं ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताशालिध्वंसप्रतियोगित्वं विवक्षितम् । उत्तरज्ञाननिष्ठपूर्वज्ञाननाशकता ज्ञानत्वावच्छिन्ना न भवति ।

पूर्वज्ञानं प्रति उत्तरज्ञानस्य ज्ञानत्वेनानिवर्तकत्वात् किन्तु विशेषगुणत्वेनैव। तस्मान्नातिव्याप्तिरिति।

एवमपि ज्ञानप्रागभावे अतिव्याप्तिः। तत्र ज्ञानत्वावच्छिन्नजनकता निरूपितजन्यताशालिध्वंसप्रतियोगित्वस्य सत्त्वात्। चरमसाक्षात्कारनिवर्त्यत्वेनाभ्युपगते प्रपञ्चे चरमसाक्षात्कारस्य साक्षात्कार त्वेनैव निवर्तकत्वेन ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताशालि ध्वंसप्रतियोगित्वस्य अभावाद्बाधश्च। ज्ञानत्वव्याप्यधर्मावच्छिन्नत्वस्य जनकतायां निवेशेन बाधवारणे, स्मृतिनिवर्त्यसंस्कारे अतिव्याप्तिः। अस्याद्वैतसिद्धावुक्तं समाधानम्। "स्मृतित्वेन स्मृतेस्संस्कारनिवर्तकत्वे मानाभावात् स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम्। दृढत्वं च समानविषयकसंस्काराजनकत्वमित्यदोषः" इति। तत्र तत्स्मृत्या तत्संस्कारनाशाभावे तत्स्मृतेरेव सन्ततत्वापत्त्या विजातीयस्मृत्यनुपपत्त्यापत्तिः। जगति प्रतिपुरुषं संस्कारो नित्यः स्यात्। चरमस्मृतेः तत्संस्कारनाशकत्वे व्यर्थोऽयं प्रयासः। संस्कारे अतिव्याप्तिस्तदवस्था।

स्मृतेस्संस्कारनाशकत्वं निषिद्ध्य अद्वैतसिद्धौ " वस्तुतस्तु साक्षात्कारत्वेनैव ज्ञाननिवर्त्यत्वं विवक्षितम्। एतेन ज्ञानत्वव्याप्यधर्मेण निश्चयत्वेन ज्ञाननिवर्त्ये संशये अतिव्याप्तिरिति शङ्कापि परिहृता इति सर्वमवदात "मित्युक्तम्।

ज्ञानत्वव्याप्यसाक्षात्कारत्वावच्छिन्नस्य जनकतायां निवेशे च गरुडध्यान * निवर्त्ये विषे अतिव्याप्तिः भ्रमरध्याननिवर्त्ये कीटे

---

* ध्यानं मनसा अवलोकनं साक्षात्कारः।

अतिव्याप्तिश्च।

किञ्च उपादानगोचरापरोक्षज्ञाननिवर्त्यप्रयत्नप्रागभावे अतिव्याप्तिः। कथमित्युक्ते उपादानगोचरापरोक्षज्ञानेन प्रयत्नो जायते। प्रयत्नः प्रयत्नप्रागभावध्वंसरूपः। तस्मात् उपादानगोचरसाक्षात्कार जन्यनाशप्रतियोगित्वं प्रयत्नप्रागभावस्य प्राप्तमिति। न च वाच्यं प्रागभावस्यैवानङ्गीकारात् नातिव्याप्तिरिति। प्रागभावानङ्गीकारे सामाग्रीबलाद्घटादेस्सन्ततत्वापत्तिवारणाय तत्स्थाने अवस्थाविशेषस्य वा कल्पनीयत्वेनाविशेषात्। किञ्च सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहतीत्यादिप्रमाणसिद्धे सेतुसाक्षात्कारनिवर्त्ये ब्रह्महत्यादिरूपे पापे अतिव्याप्तिः। मिथ्याभूतचरमसाक्षात्कारनाशे चरमसाक्षात्कार जन्यनाशप्रतियोगित्वं नास्तीति अव्याप्तिश्च।

स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वं मिथ्यात्वं इति परकीयोक्तश्चतुर्थः पक्षः अद्वैतसिद्धौ परिष्कृतः। एवकारः अशेषार्थकः। अशेषत्वं च व्यापकत्वम्। तथा च वाच्य एव प्रमेयत्वमित्यादौ वाच्यत्वे प्रमेयत्वस्येव प्रकृते स्वात्यन्ताभावे स्वप्रकारकधीविशेष्यत्वव्यापकता लाभात् उक्तव्यापकताश्रयात्य न्ताभावप्रतियोगित्वं मिथ्यात्वम्। पूर्ववैलक्षण्यं च " इति "पूर्ववैलक्षण्यं " इत्यद्वैतसिद्धिप्रतीकमुपादाय ब्रह्मानन्दीये स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपात् प्रतिपन्नेत्यादिनोक्तरूपात् वैलक्षण्यम् " इति व्याख्यातम्। स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वरूप मिथ्यात्वस्य स्वप्रकारक धीविशेष्यताव्यापकीभूताभावप्रतियोगित्वमित्यर्थकतया प्रतिपन्नोपाधौ सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वरूपद्वितीयमिथ्यात्वात् वैलक्षण्यं

कथमस्य चतुर्थत्वेनाभिमतस्येति चिन्त्यम् ।

अद्वैतसिद्धावुक्तं "काले प्रागभावात्यन्ताभावयोस्सामानाधिकरण्यं इदानीं घटात्यन्ताभाव इदानीं घटप्रागभावः इति प्रतीतिबलादङ्गी कृतम्। देशे तु तदुभयसामानाधिकरण्ये किं प्रमाणमित्युक्ते मिथ्यात्वानुमितिः श्रुतिश्च प्रमाणं " इति । तत्र मिथ्यात्वानुमितेः सन्दिग्धप्रामाण्यकत्वेन श्रुतेश्च अतदर्थकत्वेन प्रतियोगितदभावयोः एककाले एकदेशे सामानाधिकरण्ये न किञ्चिदपि प्रमाणम् ।।

स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वमित्युक्ते असति अतिव्याप्तिमाशङ्क्य स्वात्यन्ताभावाधिकरणे एव सत्त्वेन प्रतीयमानत्वं इति विशेषणविवक्षा अद्वैतसिद्धौ सूचिता ।।

'तद्धैक आहुः असदेवेदमग्र आसीत् ' इति श्रुतौ असतस्सत्त्वप्रतीत्या असति अतिव्याप्तिरिति पुनः शङ्किते असदेवेदमग्र आसीदित्यस्य नायमर्थः , किन्तु सदेवेदमग्र आसीदिति वाक्यस्य योऽर्थः तस्याभावः असदेवेत्यत्र असच्छब्दघटकनञा प्रतिपाद्यते नत्वसतः सत्त्वं विरोधात्। "इति समाहितम् । तत्र सत्त्वं च प्रमाणसिद्धत्वं प्रमाणत्वं च दोषासहकृतज्ञानकरणत्वं इत्यनुपदमेव वक्ष्यमाणस्य सत्त्वस्यासत्यपि तद्धैक आहुरिति श्रुत्या संभवेन किमर्थमिदं व्याख्यानम् ? ।

कालसंबन्धित्वरूपसत्त्वस्य विवक्षायां तु स्वात्यन्ताभावाधिकरणे एव सत्त्वेन प्रतीयमानत्वरूपमिथ्यात्वस्य ब्रह्मण्यपि प्रसङ्गः । स एवाधस्तादिति श्रुत्या सत्त्वेन कालसंबन्धित्वेन ब्रह्मणः प्रतीयमानत्वात् ।

अद्वैतसिद्धावुक्तम् "तद्धैक आहुरसदेवेदमग्र आसीदित्यत्र असत् इति श्रूयमाण-अकारस्य अमानो नाः प्रतिषेधे इत्युक्त्या प्रतिषेधपरत्वं स्वीकृत्य सदेव सौम्य इदमग्र आसीदिति वाक्यार्थस्याभावः प्रतिपाद्यः " इति । ब्रह्मानन्दीये सदेवेत्यादि इत्यद्वैतसिद्धिवाक्यमुपादाय सदेवेत्यादिश्रुत्या यत्र यत्प्रकारकबोधो जन्यते तत्र तदभावप्रकारकधीः असदेवत्यादिना बोध्यते । उक्तं हि छान्दोग्यभाष्ये 'असतः पदानभिधेयत्वेऽपि नञ्सहितवाक्यस्य तदयुक्तवाक्यार्थविरोधि धीजनकत्वं आनुभाविकं" इति । सदेवत्यादि वाक्यं तु बौद्धानां तार्किकाणां मतनिरासार्थं असदेवत्यादिवाक्यं तु इदं जगत् प्रलये नासीदिति बोधयति । ननु असदिति समासान्तर्गतं नञ्पदं सद्भिन्नस्यैव बोधकं नत्वत्र सत्त्वादेरभावबोधकमिति चेन्न । अमानो नाः प्रतिषेधवाचकाः इत्यनुशासनात् । असदित्यस्य असमासत्वात् । त एव नासतो दृष्टत्वादिति सूत्रे भामतीकल्पतर्वोः बौद्धमते असन्न कारणमिति स्पष्टमिति भावः"इत्युक्तम् । एतद्व्याख्यानं सङ्करभाष्यविरुद्धं भाति । नासतो दृष्टत्वादिति सूत्रे तदीयभाष्यम् ।"नाप्यभावः कस्यचिदुत्पत्ति हेतुः अभवत्वादेव शशविषाणादिवत् । तस्मात् असद्भ्यः शश विषाणादिभ्यः सदुत्पत्त्यदर्शनात् सद्भ्यः सुवर्णादिभ्यः सदुत्पत्तिदर्शनात् अनुपपन्नो अभावाद्भावोत्पत्त्यभ्युपगमः "इति।

सदेव सौम्येदमग्र आसीदिति वाक्यार्थस्याभावः प्रतिपाद्य इत्यङ्गीकारे कुतस्तु खलु सौम्यैवं स्यात् कथमसतस्सञ्जायेत इत्युत्तरवाक्ये कुत इत्याक्षेपासङ्गतिः । असद्वा इदमग्र आसीत् ततो वै सदजायत । नासदासीदितिं श्रुतिभिरसतोऽपि सत्त्वप्रतीतेः । अत्यन्ताभावस्य तात्विकत्वे अद्वैतहानिरित्युक्तदूषणस्यानुद्धारश्च ।

सद्विविक्तत्वं मिथ्यात्वमिति पञ्चमपक्षेऽपि तुच्छे (शशविषाणे) ब्रह्मणि च अतिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वं विशेषणं देयमित्यद्वैतसिद्धावुक्तत्वेन सदसद्विलक्षणत्वरूपप्रथमपक्षादस्य पञ्चमस्य वैलक्षण्यं न प्रतीयते।।

अद्वैतसिद्धावुक्तम् ।" सद्विविक्तत्वं वा मिथ्यात्वम् । सत्त्वं च प्रमाणसिद्धत्वं प्रमाणत्वं च दोषासहकृतज्ञानकरणत्वम् । तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्ध्यति। प्रमाण सिद्धत्वं च अबाध्यत्वव्याप्यमित्यन्यदेतत् " इति । तथा च काचादिदोष सहकृतज्ञानकरणचक्षुरिन्द्रियादिजन्य 'इदं रूप्यमि'ति ज्ञानविषयत्वात् मिथ्यात्वं यथा तथा "इति ।

एवं सति बाधः । कथमित्युक्ते अपौरुषेयत्वेन दोषासहकृतज्ञानकरणविश्वं सत्यमित्यादि वेदवाक्यजन्यज्ञान विषयत्वेन प्रपञ्चस्य तादृशज्ञानविषयभिन्नत्वरूपमिथ्यात्वाभावात्। न च वाच्यं चक्षुरादिना घटादिज्ञानजननवेळायामेव तत्र विद्यमान तद्घटात्यन्ताभावप्रत्यक्षे भवितव्ये तत्प्रतिबन्धकत्वेनानाद्यविद्याया काचादिदोषतया सहकारित्वेन सत्त्वात् घटादिप्रपञ्चे न बाधः इति। तत्वमस्यादिवाक्यजन्यात्मैक्यज्ञानादेरप्यविद्याख्यदोषसहकृतज्ञान-त्वेन दोषासहकृतज्ञानकरणजन्यज्ञानस्यैवाप्रसिद्ध्या साध्याप्रसिद्धेः।

किञ्च तुच्छे ब्रह्मणि चातिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वरूपविशेषणं देयमिति परकीयोक्तिरसङ्गता । तथा हि दोषाणामनेकत्वेऽपि भ्रमजनकत्वेनानुगमे भ्रमजनकाजन्यधीविषया-न्यत्वं मिथ्यात्वं इति फलितम् । तुच्छस्य वृत्तिरूपधीविषयत्वमेव

नास्ति । तुच्छे पदादिव्यवहारस्तु मनोवृत्तिरूपधीभिन्नविकल्पाख्य वृत्तिविशेषेण पातञ्जलिसूत्रसिद्धेन भवतीति मते तुच्छस्य भ्रमजनकाजन्यधीविषयान्यत्वं संभवतीत्यतिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वविशेषणं देयम्। यदि भ्रमजनकजन्यधीविषयत्वं पर्यवसितं मिथ्यात्वं इति च परकीयसंमतं तदा न तुच्छे अतिव्याप्त्यवकाशः । धीविषयत्वस्य तत्राभावादेव । ब्रह्मणो वृत्तिविषयत्वाभ्युपगमपक्षे ब्रह्मण्यतिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वविशेषणं देयम्। अन्यथा अतिव्याप्तेर्नावकाशः । वृत्ति विषयत्वेनानभ्युपगते तुच्छे ब्रह्मणि चातिव्याप्तेर्नैवावकाशो यदि भ्रमजनकजन्यधीविषयत्वं मिथ्यात्वमिति फलितं स्वीकृतम् । तस्मादतिव्याप्तिवारणाय सत्त्वेन प्रतीयमानत्वविशेषणं व्यर्थम्।

किञ्च परकीयमते सर्वस्या अपि धियोऽविद्यारूपभ्रमजनकजन्यत्वेन तदन्यधियोऽप्रसिद्ध्या भ्रमजनकजन्यत्वविशेषणं व्यर्थमेव।

किञ्च घटादेः भ्रमजनकजन्यधीविषयत्वं कथम् । घटादिज्ञान जननवेळायां घटात्यन्ताभावप्रत्यक्षस्य कथं भ्रमताप्रयोजकत्वम् । घटवति भूतले घटवद्भूतलमिति ज्ञानस्य भ्रमत्वे तत्प्रयोजकस्य भूतलवृत्ति घटाभावस्य सत्त्वं वाच्यम् । घटाभावस्य पारमार्थिकत्वे तज्ज्ञानबाध्यस्य घटज्ञानस्य न भ्रमत्वम् । लोके पारमार्थिकेतरज्ञानबाध्यस्यैव भ्रमत्वेन व्यवहारात् । स च भूतलवृत्तिघटाभावः पारमार्थिको न भवति। अभावस्य पारमार्थिकतया ब्रह्मस्वरूपत्वे ब्रह्मणस्सप्रतियोगिकत्वं स्यात्। व्यावहारिकघटाभावस्य चायोगः। समानसत्ताकयोर्भावाभावयो र्विरोधस्याद्वैतवादिभिरुक्तत्वेन व्यावहारिकघटवति भूतले व्यावहारिकघटाभावस्यानुपपन्नत्वात् ।

नापि प्रातिभासिकः । प्रातिभासिकघ टाभाववत्ताज्ञानस्य घटवद्भूतलमिति ज्ञाने भ्रमत्वप्रयोजकत्वायोगात् ।

अस्तु वा साध्यभूतं मिथ्यात्वं यत्किञ्चित् । साध्यभूतं मिथ्यात्वं सत्यं वा मिथ्या वा ? सत्यत्वे सदद्वैतहानिः । तद्वदेव प्रपञ्चस्य सत्यत्वापत्तिः । मिथ्यात्वे च प्रपञ्चसत्यतापातः । एकस्मिन्धर्मिणि प्रसक्तयोर्विरुद्धयोर्धर्मयोरेकस्य मिथ्यात्वेऽपरस्य सत्यत्वनियमात् । एतदनूद्याद्वैतसिद्धावुक्तम् । " उभयथा अद्वैतव्याघात इति चेन्न । मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वानापत्तेः । तत्र हि विरुद्ध धर्मयोरेकमिथ्यात्वे अपरस्य सत्यत्वं यत्र मिथ्यात्वावच्छेदक मुभयवृत्ति न भवेत् यथा परस्परविरहरूपयोः रजतत्वतदभावयोः शुक्तौ । यथा परस्परविरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः । तत्र निषेध्यतावच्छेदकभेदनियमात् । प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि "इति । अयं परिहारः असमीचीनः । अत्रायं प्रयोगः । इदं सत्यं मिथ्याभूतमिथ्यात्वकत्वात् ब्रह्मवत् इति । अत्रानुमाने यो यद्विरुद्धमिथ्याभूतधर्मवान् स सत्यभूततद्धर्मवान् यथा घटविरुद्ध मिथ्याभूतघटाभाववान् भूप्रदेशः सत्यभूतघटवान् इति सामान्यव्याप्तेः प्रत्यक्षादिसिद्धतया हेतोरप्रयोजकत्वशङ्कानवकाशः । न च सत्यत्वरूप साध्याभाववति शुक्तिरूप्ये मिथ्याभूतमिथ्यात्वकत्वस्य सत्त्वाद् व्यभि चारः । वादिरीत्या शुक्तिरूप्यमिथ्यात्वस्य सत्यत्वान्न तत्र हेतुवृत्तिः । प्रतिवादिरीत्या हेतौ धर्मिसत्तासमसत्ताकत्वनिवेशनेन वारणं संभवति । शुक्तिरूप्यसत्त्वस्य प्रातिभासिकत्वेन तन्मिथ्यात्वस्य च व्यावहारि कत्वेन धर्मिसत्तासमसत्ताकत्वाभावात् । उक्तं च विष्णुदासैर्वाद रत्नावल्यां " मिथ्यात्वस्य च मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् ।

सत्यत्वस्य सत्यत्वे सत्यत्वं साधितं भवेत् "इति।

न च सत्यत्वमिथ्यात्वयोः परस्परविरहव्यापकत्वाभावः। मिथ्यात्वाभाववति तुच्छे सत्यत्वाभावेन मिथ्यात्वविरहव्यापकत्वं सत्यत्वस्य न संभवतीति न शङ्क्यम्। तुच्छे कथं मिथ्यात्वाभावः? सदसद्विलक्षणत्वाभावस्य सद्विलक्षणत्वाभावासद्विलक्षणत्वाभावानतिरिक्तत्वेन सद्विलक्षणत्ववति तुच्छे सद्विलक्षणत्वाभावः कथं संभवेत्? अद्वैतसिद्धावुक्तं "यथा च सत्यत्वमिथ्यात्वयोर्न परस्परविरह व्यापकत्वं न परस्परविरहरूपत्वं च तथोपपादितमधस्तात् " इति। [1]अधस्तादनुपपाद्य उपपादितमित्युक्तम्। प्रत्युत मिथ्यात्वाभावः सत्यत्वमित्युक्तम्।

अद्वैतसिद्धौ " परस्परविरहरूपत्वेऽपि विषमसत्ताकयोरविरोधः प्रपञ्चितः। व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात् तार्किकमतसिद्धसंयोगतदभाववत् सत्यत्वमिथ्यात्वयोः समुच्चयाभ्युपगमाच्च न विरोधः "इत्युक्तम्। तत्र प्रपञ्चे व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारे प्रपञ्चस्य प्रातिभासिकत्वापत्त्या अर्थक्रियाकारित्वानुपपत्तिः। अपसिद्धान्तश्च

---

[1]अधस्तादनुपपाद्येति। शङ्कितमेतत् विठलेशीये (लघुचन्द्रिकाव्याख्याने)। ''ननु सत्त्वासत्त्वयोः परस्परविरहरूपत्वाद्यभावः पूर्वमुपपादितः न तु सत्यत्व मिथ्यात्वयोः इत्यतः व्याचष्टे **यथेति**। येन प्रकारेणेत्यर्थः। तथा स प्रकारः। उपपादितं= सत्त्वासत्त्वे अधिकृत्य ज्ञापितम्। तथा च सत्त्वासत्त्वयोः परस्पराभावत्वं नास्ति, प्रपञ्चे तयोरेकासत्त्वेप्यपरासत्त्वात् इति यथोक्तं प्रथममिथ्यात्वे तथा सत्यत्वमिथ्यात्वयोरपि तन्न। तुच्छे द्वयोः प्रत्येकासत्त्वात् इति भावः। (लघुचन्द्रिका) इदं च तुच्छे कथं मिथ्यात्वाभावः? इति ग्रन्थेन प्रागेव निरस्तम्।

निषेध्यतावच्छेदकीभूतदृश्यत्वस्य मिथ्यात्वे तदभावे च साम्यादुभयस्य एकाधिकरणकत्वमिति हि स्वीकृतम् । दृश्यत्वे दृश्यत्वस्याभावात् दृश्यत्वगतमिथ्यात्वसत्यत्वयोः एकनिषेध्यतावच्छेदकधर्माभावेन एकस्य मिथ्यात्वे अन्यस्य सत्यत्वं स्यादित्यपसिद्धान्तः ॥

# तृतीय ःपरिच्छेदः ।

## अथ हेतुविचारः । दृश्यत्वम् ।

दृश्यत्वं किन्नाम ? दृग्रूपान्तःकरणवृत्तिविषयत्वं, वृत्तिव्याप्यत्वं, शब्दाजन्यवृत्तिविषयत्वं, सप्रकारकवृत्तिविषयत्वं, अस्वप्रकाशत्वं, स्वानाशकज्ञाननाश्यज्ञानविषयत्वमित्यनेकधा परिष्कारेण ब्रह्मणः तुच्छस्य च व्यावृत्तिकल्पनायोद्यमः कृतः । परन्तु निष्फलो भाति सर्वोऽपि श्रमः । तथाहि

दृग्रूपान्तःकरणवृत्तिविषयत्वञ्चेत् ब्रह्मणि व्यभिचारः । दृष्टान्तस्य शुक्तिरूप्यस्य अविद्यावृत्तिविषयत्वेन अन्तःकरणवृत्तिविषयत्वा भावात् साधनवैकल्यम् । यदि अपरोक्षान्तःकरणवृत्तिविषयत्वाभावेऽपि परोक्ष भूतानुमितिशाब्दबोधात्मकान्तःकरणवृत्तिविषयत्वेन शुक्तिरूप्ये न साधनवैकल्यमित्युच्यते [1]तर्हि ब्रह्मणि व्यभिचारः तदवस्थः । अद्वैतसिद्धौ दृश्यत्वपरिष्कारे " तथाहि किमिदं दृश्यत्वं " इत्यारभ्य

---

[1] तर्हि इति । अभ्युपगम्योक्तमिदम् । वस्तुतस्तु करणसन्निकर्षानुयोगित्वरूपस्य विषयत्वस्य शुक्तिरूप्यादौ अभावेन साधनवैकल्यमपि तदवस्थमेव । तदुक्तं प्रपञ्चमिथ्यात्वानुमानखण्डने '' उक्तप्रकारेण दृश्यत्वाभावात् साधनविकलश्चेति । विचार्यते चैतदुत्तरत्र ।

षट्प्रकारैर्विकल्प्य तत्र तत्र न्यायामृतोक्तदूषणान्यनूद्योक्तम् "इति चेन् मैवम्। *फलव्याप्यत्वातिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वात्। न च वृत्तिव्याप्यत्वपक्षे ब्रह्मणि व्यभिचारः। अन्यथा ब्रह्मपराणां वेदान्तानां वैयर्थ्यप्रसङ्गादिति वाच्यम्। शुद्धं हि ब्रह्म न दृश्यम्। यत्तद्रेश्यमिति श्रुतेः। किन्तूपहितमेव। तच्च मिथ्यैव। न हि वृत्तिदशायां तदनुपहितं भाति। न च सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते। इति स्ववचनविरोध इति वाच्यम्। तस्यापि उपहितपरत्वात्। न चैवं सति शुद्धधीर्न स्यादिति वाच्यम्। स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात्। ननु अज्ञाते धर्मिणि कस्यचिदपि धर्मस्य विधातुं निषेद्धुं वा अशक्यत्वेन शुद्धे दृश्यत्वं निषेधता (पुरुषेण) शुद्धस्य ज्ञेयत्वमवश्यं स्वीकरणीयम्। न च स्वप्रकाशत्वेन स्वतस्सिद्धे शुद्धे श्रुत्या दृश्यत्वनिषेध इति वाच्यम्। शुद्धं स्वप्रकाशमिति इति शब्दजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धेः इति चेन्न। वृत्तिकाले वृत्तिरूपेण धर्मेण प्रतीतस्य शुद्धत्वासंभवात्। शुद्धस्य वृत्तिविषयत्वं न संभवति। अतः शुद्धं स्वप्रकाशमिति वाक्यस्य लक्षणया अशुद्धत्वं अस्वप्रकाशत्व व्यापकमित्यर्थः। तथा च अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति यथा भेदनिषेधेन अभिन्नत्वम्। न च शुद्धपदेन अभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोगवैयर्थ्यम्। पर्यवसितार्थमादाय सार्थक्योपपत्तेः। एवञ्च शुद्धं न दृश्यं न मिथ्या इत्यस्य अशुद्धत्वं

---

*अन्तःकरणवृत्त्यवच्छिन्नचैतन्याभेदेनाभिव्यक्तविषयावच्छिन्नचैतन्यं 'फलं' इति परकीयपरिभाषा। तदध्यस्थो विषयः फलव्याप्यमित्युच्यते। प्रमातृ = अन्तःकरणावच्छिन्नचैतन्यम्। प्रमाणं = अन्तःकरणवृत्त्यवच्छिन्नचैतन्यम्। प्रमेयम् = विषयाध्यासाधिष्ठानापरपर्यायविषयावच्छिन्नचैतन्यम्। विषयाकारेण परिणतस्य अन्तःकरणस्य वृत्तिरिति संज्ञा।

दृश्यत्वमिथ्यात्वयोर्व्यापकमिति व्यतिरेकः पर्यवस्यति "इति।

अत्र शुद्धस्य ब्रह्मणो वृत्तिविषयत्वे वेदान्तजन्यनिष्प्रकारकचरम साक्षात्कारात्मकवृत्तेर्मिथ्याभूतोपहितब्रह्मविषयत्वे अङ्गीकृते चरम साक्षात्कारस्याज्ञाननिवर्तकत्वं न स्यात्। "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः "इति तदीयभाष्यकारवचने केवलेति पदं विवरणकारमते शुद्धब्रह्मपरं, वाचस्पतिमते अज्ञानकार्यानुपहितपरं, इति तदीयैर्व्याख्यातम्। समानविषयकयोः समानाधिकरणयोरेव निवर्तकनिवर्त्यभावस्य दृष्टत्वात् शुद्धब्रह्मणो वृत्त्यविषयत्वे तादृशसाक्षात्कारस्याशुद्धब्रह्माश्रितस्य शुद्धब्रह्माश्रिताज्ञाननिवर्तकत्वं न स्यादेव। भिन्नविषयकत्वात्।

किञ्च शुद्धब्रह्मणः वृत्त्यविषयत्वे शुद्धं स्वप्रकाशं इति वाक्यस्य निर्विषयत्वापत्तिः। अज्ञानाविरोधिनः स्फुरणस्याङ्गीकारेऽपि तस्य घटादावपि सुवचत्वेन शुद्धब्रह्माविषयकेन स्फुरणेन शुद्धब्रह्म सिद्ध्यसंभवात्। असिद्धे शुद्धब्रह्मणि अस्वप्रकाशत्वव्यापक शुद्धत्वाभावपर्यवसानायोगाच्च। शुद्धं ब्रह्मनिष्ठं अन्यत्र वृत्तौ बाधको पपन्नत्वे सति क्वचिद्वृत्तिमत्वात्, इति वा अस्वप्रकाशत्व व्यापकीभूताभावप्रतियोगित्वादिति वा पर्यवसानायोगात्। अणोरणी यान्महतो महीयान् " "आत्मास्य जन्तोर्निहितो गुहायां " "तमक्रतुं पश्यति वीतशोकः " "धातुः प्रसादात् महिमानमात्मनः " तरति शोकमात्मवित् "परमं ब्रह्म " "ब्रह्म वेद ब्रह्मैव भवति" "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे

परावरे "इत्यादि श्रुतिभिः, ब्रह्मणो जिज्ञासा इति कर्मणि षष्टी , तमेव धीरो विज्ञाय इति द्वितीया द्रष्टव्यमित्यादौ तव्यप्रत्ययः , साक्षात्कारस्य सकर्मकत्वं , इत्यादिभिः शुद्धब्रह्मणो वृत्तिविषयत्वात् ब्रह्मणि व्यभिचारो दुर्वारः । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् । ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते इति भवदीयवचनविरोधश्च । उपहितस्य मिथ्याभूतत्वेन तद्विषयकसाक्षात्कारस्य प्रपञ्चोपादानाज्ञान विवर्तकत्वे अहमज्ञः सन्घटः इति साक्षात्कारस्यापि प्रपञ्चोपादानाज्ञान निवर्तकत्वं स्यात् तस्यापि उपहितमिथ्याभूतविषयकत्वात् । तदन्याविषयकत्वस्य तदज्ञाननिवृत्तौ प्रयोजकत्वे दण्डी पुरुषः इति ज्ञानस्य पुरुष विषयकाज्ञानानिवर्तकत्वं घटपटाविति ज्ञानस्य घटाज्ञाननिवर्तकत्वं च अनुभवसिद्धं न स्यात् । प्रतिवादिरीत्या ब्रह्मणि व्यभिचारस्तु सर्वथा दुर्वारः ।

अद्वैतसिद्धावुक्तम् । 'शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम् । अन्यथा शशविषाणं तुच्छमित्यादिशब्दजन्यवृत्तिविषये तुच्छे व्यभिचारस्य दुरुद्धरत्वात् । एवञ्च सति शुद्धस्य वेदान्त जन्यवृत्तिविषयत्वेन तत्र व्यभिचारः । तुच्छशुद्धयोः शब्दान्य वृत्तिविषयत्वानभ्युपगमात् "इति । अत्र शशविषाणं नार्थक्रियाकारि असत्त्वात् इत्यनुमित्यात्मकवृत्तिविषयत्वस्य तुच्छे सत्त्वेन व्यभिचारः । किञ्च चोदनैकप्रमाणेषु धर्मादिषु भागासिद्धिः । दृश्यत्वे दृश्यत्वमभ्युगम्य दृश्यत्वस्यापि मिथ्यात्वाङ्गीकारपक्षे मिथ्याभूत दृश्यत्वकत्वस्य ब्रह्मण्यपि सत्त्वेन व्यभिचारो दुर्वारः ।

अद्वैतसिद्धावुक्तम् । "यद्वा सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम् । प्रकारश्च सोपाख्यः कश्चिद्धर्मः । तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे

निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः। उपाख्या च अस्तीतिप्रतीतिविषयत्वादीत्यन्यदेतत्" इति । अत्र निष्प्रकारके चरमसाक्षात्कारे सप्रकारकवृत्तिविषयत्वाभावेन भागासिद्धिः । शशविषाणमस्तीति वाक्यजन्यवृत्तिविषये तुच्छे व्यभिचारश्च।

अद्वैतसिद्धावुक्तम् । " अस्वप्रकाशत्वं दृश्यत्वमित्यपि हेतुः । स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम् । यत्साक्षादपरोक्षात् तद्ब्रह्मेति श्रुतेः । तथा चान्यानधीनापरोक्षत्वं पर्यवस्यति। तन्निरूपितभेदवत्त्वं हेतुः "इति।

अत्र अन्यानधीनापरोक्षत्ववद्भिन्नत्वस्यास्वप्रकाशत्वस्य तुच्छेपि सत्त्वेन व्यभिचारः । परप्रकाश्यत्वाभावः स्वप्रकाशत्वं इति पूर्वोक्त स्ववचनविरोधश्च । स्वप्रकाशं ब्रह्मेति समानाधिकरणप्रतीत्या, समानाधिकरणप्रतीतौ सर्वत्र भेदाभेदोभयवादिनां भवतां मते ब्रह्मणि स्वप्रकाशत्ववन्निरूपितभेदस्य सत्त्वेन व्यभिचारो दुर्वारः।

स्वप्रकाशत्वोपहिते ब्रह्मणि मिथ्याभूते स्वप्रकाशत्ववन्निरूपित भेदवत्त्वरूपदृश्यत्वस्याभावाद्भागासिद्धिः।

स्वसमानसत्ताकदृश्यत्वं विवक्षितमिति तुच्छे ब्रह्मणि च व्यभिचारवारणे सत्तात्रैविध्यसिद्धेर्विश्वमिथ्यात्वसिद्ध्यनन्तर भावित्वेन " यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि " इति प्रतिवादिभिरभ्युपगतत्वात् ब्रह्मणि व्यभिचारो न परिहृतः।

स्वानाशकज्ञानानाश्यज्ञानविषयत्वं दृश्यत्वमित्यपि स्वीकृतं परकीयैः । स्वं प्रपञ्चः । तदनाशकं यज्ज्ञानं प्रपञ्चज्ञानं तदनाश्यं

प्रपञ्चज्ञानमेव । तद्विषयत्वं प्रपञ्चे एवास्तीति प्रपञ्चे दृश्यत्वम् । एवं सति ब्रह्मणि न व्यभिचारः । कथमित्युक्ते स्वं ब्रह्म तदनाशकं यज्ज्ञानं ब्रह्मज्ञानं तदनाश्यस्याप्रसिद्ध्या स्वानाशकज्ञानानाश्यज्ञानविषयत्वस्य ब्रह्मण्यभावान्न व्यभिचार इति परिष्कृतः परकीयैः ।

अत्र स्वपदेन ब्रह्मणः परिग्रहेऽपि स्वानाशकं यज्ज्ञानं [1]घटज्ञानं तद नाश्यं यज्ज्ञानं ब्रह्मज्ञानं तद्विषयत्वस्य ब्रह्मणि सत्त्वात् व्यभिचारः । न च स्वानशकज्ञाने स्वविषयकत्वस्यापि निवेशात् न व्यभिचार इति वाच्यम् । "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते "इत्यद्वैतिवचनेन घटादिविषयकज्ञानस्यापि ब्रह्मविषयकत्वात् । अद्वैतसिद्धिस्थवचनस्य उपहितब्रह्मविषयकत्वस्याङ्गीकारेऽपि उपहितब्रह्मविषयकज्ञाने शुद्ध ब्रह्मणोऽपि विषयत्वस्यावश्यकत्वात् । किञ्च तुच्छे व्यभिचारः । कथमित्युक्ते स्वं तुच्छं स्वानाश्कं यज्ज्ञानं तुच्छज्ञानमेव । तदनाश्यं ज्ञानं तुच्छविषयकज्ञानं तद्विषयत्वस्य तुच्छे सत्त्वात् प्रतिवादिरीत्या व्यभिचारः ।

इच्छाऽव्यवहितपूर्वोत्पन्नब्रह्मज्ञानमादाय ब्रह्मणि व्यभिचारश्च ।

किञ्च हेतुभूतदृश्यत्वं सत्यं मिथ्या वा ? उभयथाऽपि दृश्यत्वे दृश्यत्वमस्ति वा न वा ? आद्ये (दृश्यत्वं सत्यं दृश्यत्वे दृश्यत्वमस्तीति कल्पे ) सदद्वैतहानिः । दृश्यत्वे दृश्यत्वमित्यात्माश्रयश्च । द्वितीये (दृश्य त्वं सत्यं दृश्यत्वे दृश्यत्वं नास्तीति कल्पे) पूर्वोक्तवत्सदद्वैतहानिः । दृश्यत्वे दृश्यत्वाभावात् । तथाच दृश्यत्वस्याज्ञातत्वात् ज्ञातलिङ्गस्यैवानुमितिजनकत्वेन दृश्यत्वस्य हेतुत्वमेव निरस्तं भवति ।

---

[1] उपलक्षणमेतत् । स्वस्य स्वनाशकत्वस्याप्रसिद्धेः स्वविषयकत्वनिवेशेऽपि व्यभिचारोऽपरिहार्य एव ।

व्यभिचारश्च। तृतीये (दृश्यत्वं मिथ्या दृश्यत्वे दृश्यत्वमस्तीति कल्पे) आत्माश्रयः। चतुर्थे (दृश्यत्वं मिथ्या दृश्यत्वे दृश्यत्वं नास्तीति कल्पे) मिथ्याभूतत्वेन पक्षतावच्छेदकाक्रान्तदृश्यत्वे हेतोरभावाद्भागासिद्धिः।

## विषयत्वविचार:

दृश्यत्वं नाम दृग्विषयत्वमित्युक्ते विषयत्वस्य निरूपयितु मशक्यत्वेन दृगध्यस्ततत्वमेव दृश्यत्वमिति स्थापनायाद्वैतसिद्धौ न्यायामृतगतविषयत्वपरिष्कारमनूद्य दूषितम्।

"ननु ज्ञानजनकसन्निकर्षाश्रयत्वं तद्विषयत्वम्। न च रूपज्ञान करणमनःसन्निकर्षाश्रयस्यात्मनस्तद्विषयत्वापत्तिः। करणपदेनासाधा रणकरणस्य विवक्षितत्वात्। न चासाधारणज्ञानकरणचक्षुः सन्निकर्षाश्रयस्य मनसोऽपि चाक्षुषरूपज्ञानविषयत्वापत्तिः। सन्निकर्ष पदेनाप्यसाधारणकारणज्ञानजनकसन्निकर्षस्यैवोक्तत्वात् इति चेन्न। चक्षुर्मनस्संयोगस्यापिचाक्षुषज्ञानासाधारणकारणत्वेन मनसोऽपि चाक्षुषज्ञानविषयत्वापत्तेः। परोक्षज्ञान विषयेऽव्याप्तेश्च "इत्युक्तम्।

अत्र चक्षुषि ज्ञानासाधारणकारणत्वं चाक्षुषप्रत्यक्षत्वावच्छिन्न कार्यतानिरूपितकारणताशालित्वम्। तादृशासाधारणकारणता शालित्वं चक्षुर्मनस्सन्निकर्षे नास्ति। कुत इत्युक्ते चक्षुर्मनस्सन्निकर्षस्य चाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रत्यसाधारणकारणत्वे एवं श्रोत्रादीन्द्रिय मनस्सन्निकर्षाणामपि तत्तत्प्रत्यक्षत्वावच्छिन्नं प्रत्यसाधारणत्वापत्त्या अनेककार्यकारणभावकल्पनाप्रयुक्तगौरवं स्यात्। अतः जन्यलौकिक साक्षात्कारत्वावच्छिन्नकार्यतानिरूपितेन्द्रियमनस्सन्निकर्षत्वेन कारण ताकल्पने श्रोत्रेन्द्रियमनस्सन्निकर्षाणां पृथक्पृथक्कार्यकारणभावाकल्पना

प्रयुक्तलाघवाच्चक्षुर्मनस्सन्निकर्षत्वेनासाधारणकारणत्वं नास्तीति मनसि नातिव्याप्तिः।

ब्रह्मानन्दीये "प्रत्यक्षं प्रतीन्द्रियमनस्संयोगत्वेनेव चाक्षुषं प्रति चक्षुर्मनोयोगत्वेन हेतुत्वात्। "इत्याद्युक्त्वा 'वस्तुतो रसनादीन्द्रिय संयुक्ते मनसि सति चक्षुर्विषयसंयोगेऽपि चाक्षुषानुत्पत्तेश्चाक्षुषं प्रति चक्षुर्मनोयोगे जातिविशेषणोक्तसंबन्धेन हेतुत्वमावश्यकमिति भावः " इत्युक्तम्।

अत्र चक्षुर्मनस्सन्निकर्षत्वेन चाक्षुषप्रत्यक्षत्वेन कार्यकारणभाव कल्पने तथैव त्वाचप्रत्यक्षादिस्थलेऽप्यनेककार्यकारणभावकल्पना प्रसङ्गेन गौरवम्। मनसि श्रोत्रादिसन्निकृष्टे सति चक्षुषः स्वविषय सन्निकर्षे सत्यपि चाक्षुषप्रत्यक्षाजननात् चाक्षुषप्रत्यक्षत्वेन चक्षुर्मन स्सन्निकर्षत्वेन कार्यकारणभाव आवश्यक इति यत्तदसङ्गतमेव। चक्षुर्मनस्सन्निकर्षस्य असाधारणकारणत्वाभावेपि साधारणकारण त्वाभ्युपगमेन मनसः श्रोत्रादिदशायां मनसः अणुत्वेन युगपदिन्द्रियद्वयेन सन्निकर्षायोगात् तदानीं चक्षुर्मनस्संयोगरूपसाधारणकारणाभावेनैव चाक्षुषप्रत्यक्षं नास्ति। अतस्तदापादनमनुचितं भाति।

चाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुर्वच्चक्षुर्मनस्संयोगस्यासाधारण कारणत्वस्याङ्गीकारेऽपि करणसन्निकर्षे एकस्य भिन्नविषयकानेकज्ञान जनकताशून्यत्वं निवेश्यते। चक्षुर्विषयसन्निकर्षे च एकस्य चक्षूरूप सन्निकर्षस्य घटसाक्षात्काराजनकत्वात् घटचक्षुस्सन्निकर्षस्य रूप साक्षात्काराजनकत्वादेकस्य सन्निकर्षस्य भिन्नविषयकानेकसाक्षात्कारा जनकत्वरूपमसाधारण्यं घटचक्षुस्सन्निकर्षे अस्ति। एवं कार्यविभुविशेष गुणानां भेदस्यासमवायिकारणभेदाधीनत्वस्य तार्किकैरुक्तत्वादात्ममन

स्सन्निकर्षस्य ज्ञानासमवायिकारणस्य तथात्वेऽपि चक्षुर्मनस्सन्निकर्षस्य एकस्यैव भिन्नभिन्नद्रव्यादिविषयकानेकज्ञानजनकत्वसम्भवेन चक्षुर्मनस्सन्निकर्षमादाय मनस्यतिव्याप्तेर्नावकाशः । अत एव न्यायामृते " चक्षुर्मनस्संयोगस्य द्रव्यादिज्ञानसाधारणत्वात् " इत्युक्तम् । सुधायां च " चक्षुर्मनस्सन्निकर्षो हि द्रव्यादिज्ञानसाधारणः " इत्युक्तम् । विस्तरस्तु सुधायादुपत्यटिप्पण्यां सिद्धान्तेऽपि तथोपपादनपूर्वकं कृतो द्रष्टव्यः ॥

अद्वैतसिद्धौ " यद्यपि स्वग्राहकज्ञानविषयीभूतं ज्ञानविषयकानुमित्यनुव्यवसायात्मकं ज्ञानं ज्ञानावच्छिन्नस्वभावं तथाऽपि स्वयं यज्ज्ञानं प्रति विषयः तदवच्छिन्नस्वभावं नेति नातिव्यप्तिः " इति न्यायामृतोक्तमनूद्य दूषितम् " इति चेन्न । मत्समवेतं रूपज्ञानमित्याकारकज्ञानस्यात्मसमवायविषयकत्वाभावप्रसङ्गात् । आत्मसमवायस्य संबन्धत्वेन संबन्धिभूतस्वज्ञानावच्छिन्नत्वात् " इति ॥

ब्रह्मानन्दीये स्वग्राहकेति प्रतीकमुपादायोक्तं " ननु सर्वं ज्ञानं वाच्यत्वेन जानामि इत्याद्यनुव्यवसायः स्वं प्रति विषयः स्वेनावच्छिन्नस्वभावश्चेत्यव्याप्तिः । अथ येन रूपेण विषयता तेन रूपेण तज्ज्ञानानवच्छिन्नस्वभावता वाच्या । प्रकृते च सर्वज्ञानत्वेन विषयता तेन रूपेण न ज्ञानावच्छिन्नता किन्तु ज्ञानत्वमात्रेणेति चेत् तथाऽपि वाच्यस्य ज्ञानं वाच्यत्वेन जानामीत्यनुव्यसाये अव्याप्तिः । अतो असङ्गतेयं परोक्तिरिति ध्येयम् " इति ॥

अत्र सर्वं ज्ञानं वाच्यत्वेन जानामि इत्यनुव्यवसायस्य तथापीत्युक्तस्य वाच्यस्य ज्ञानं वाच्यत्वेन जानामि इत्यनुव्यवसायस्य च विशेषश्चिन्त्यः ॥

ब्रह्मान्दीये तत्रैवोक्तं संबन्धिभूतस्वज्ञानेति प्रतीकमुपादाय " न च यत्र ज्ञाने समवायो विषयः तेनानवच्छिन्नत्वं तत्राक्षतमिति वाच्यम् । समवायस्य एकत्वेन रूपज्ञानसमवायस्य रूपज्ञानज्ञानीयत्वात् । रूपज्ञानं मत्समवेतधीविषय इति ज्ञानावच्छिन्नत्वस्य समवाये सत्त्वाच्चासंभवात् । ननु ज्ञानत्वेनावच्छेदकत्वं निवेशनीयम् । आत्मसमवायस्य तु स्वविषयकज्ञानसंबन्धित्वेनावच्छेदकं न तु ज्ञानत्वेन । विषयस्तु न केनापि रूपेण ज्ञानावच्छिन्नः । ज्ञानं विनाऽपि घटोऽयमित्यादिनिरूपणादिति चेन्न । ज्ञानत्वेनावच्छेदकतानिवेशे तज्ज्ञानानवच्छिन्नेत्यस्य कृत्याभावात् । न हि नाशेच्छादौ ज्ञानत्वेन ज्ञानमवच्छेदकं किन्तु प्रतियोगित्वविषयत्वादिना । अथ येन रूपेण संबन्धिताधीस्तेनावच्छेदकत्वं निवेश्यम् । तथाच ज्ञानं नष्टमित्यादौ ज्ञानत्वेन संबन्धित्वस्य प्रत्ययात्तद्वारणम् । प्रकृतेऽपि तथा प्रत्ययात्तद्दोषः। विषयस्त्वित्यादिकं तूक्तव्याप्तिनिरासान्निरस्तम्। ज्ञानं गुण इत्यादौ विषयं विनाऽपि ज्ञाननिरूपणाच्च । न च यज्ज्ञानप्रत्यक्षत्वं यदीयसंबन्धव्याप्यं स तस्य विषय इति वाच्यम् । यज्ज्ञानस्य प्रत्यक्षे विषयतानिवेशे आत्माश्रयात् । संबन्ध सामान्यनिवेशे आत्मादेर्धीमात्रविषयत्वापत्तेः " इति ।।

अत्र स्वग्राहकज्ञानानवच्छिन्नस्वभावत्वस्य न्यायामृताचार्योक्तस्य मत्समवेतं रूपज्ञानं इत्याकारकज्ञानविषये आत्मसमवाये सत्त्वात् " इत्याकारकज्ञानस्यात्मसमवायविषयकत्वाभावप्रसङ्गात् " इत्यद्वैत सिद्ध्युक्तं कथं सङ्गच्छते । समवाये रूपज्ञानावच्छिन्नत्वसत्त्वेऽपि स्वग्राहकेति 'स्व' पदेनग्राह्यसमवायविषयकं यज्ज्ञानं रूपज्ञानं मत्समवेतमित्याकारकं ज्ञानं तदनवच्छिन्नस्वभावत्वस्य समवाये सत्त्वात्समवाये अव्याप्तिर्नास्त्येव । न च समवास्य एकत्वात्

रूपज्ञाननिरूपितसमवायस्य स्वग्राहकज्ञानसमवायस्य च एकत्वेन रूपज्ञानसमवायस्य रूपज्ञानज्ञानीयत्वादिति ब्रह्मानन्दीयोक्तं युक्तम् । समवायस्यैवानङ्गीकारेण तदेकत्वं तु दूरं निरस्तमेव । वायौ न रूपसमवाय इति प्रमया समवायनानात्वं सिद्धं इति नवीन तार्किकैरङ्गीकाराच्च । " रूपज्ञानं मत्सवेतधीविषय इति ज्ञानावच्छिन्न स्वभावत्वस्य समवाये सत्त्वाच्च " इति ब्रह्मान्दीयोक्तं तु चिन्त्यमेव । विशेषाप्रतीतेः । सर्वं ज्ञानं वाच्यत्वेन जानामीत्यनुव्यवसाये अव्याप्त्यभिधानं च चिन्त्यम् । स्वान्यस्वग्राहकज्ञानानवच्छिन्न स्वभावत्वस्य विवक्षायां तद्वारणात् ज्ञानं गुण इत्यादौ विषयं विनाऽपि ज्ञाननिरूपणाच्चेत्युक्तमपि न साधु । तेन ज्ञानस्य विषयावच्छिन्न स्वभावत्वं नास्तीत्युक्तं स्यात् । तथा सति पितृगुर्वादीनामपि ससंबन्धिकपदार्थत्वं न स्यात्तेषामपि घटादिवत्पिता रूपी गुरुः श्रेष्ठः इत्यादिना संबन्धिपदार्थान्तरं विनाऽपि निरूपयितुं शक्यत्वात् ।

घटस्य ज्ञानं इति प्रतीत्या घटावच्छिन्नस्वभावत्वं यथा ज्ञानस्य तथा ज्ञातो घट इति प्रतीत्या घटस्यापि ज्ञानावच्छिन्नस्वभावत्वेना सम्भवाच्चेत्यद्वैतसिद्ध्युक्तमपि न साधु । लोके अवच्छेदकतासाधकत्वेन स्वरससिद्धया घटज्ञानं घटस्य ज्ञानं इत्यादिप्रतीत्या घटादेर्ज्ञानाव च्छेदकत्ववत् ज्ञानघटः ज्ञानस्य घटः इत्यादिप्रतीत्यभावेन घटादेर्ज्ञानानवच्छिन्नस्वभावत्वस्य सिद्धतया नाऽसंभवः । ज्ञातो घट इति प्रतीतिस्तु ज्ञानविषयत्वे अवच्छेदकत्वस्यावगाहिनी न तु ज्ञानस्य साक्षाद्धटादाववच्छेदकत्वावगाहिनीति । घटदौ तु साक्षात् ज्ञानान वच्छिन्नस्वभावत्वं वर्तत एवेति नासंभवः ।।

यदुक्तं समवायस्य ज्ञानावच्छिन्नस्वभावत्वनिरूपणायाद्वैतसिद्धौ

ब्रह्मानन्दीये च तदपि न साधु । स्वनिष्ठज्ञानावच्छेदकता यद्रूपावच्छिन्ना ज्ञाननिष्ठावच्छेदकतानिरूपितस्वनिष्ठतद्रूपावच्छिन्नावच्छेद्यताशून्यत्व-रूपज्ञानानवच्छिन्नस्वभावत्वस्य विवक्षायां समवाये रूपज्ञानावच्छिन्न स्वभावे नाव्याप्तिः । कथमित्युक्ते स्वं समवायः तान्निष्ठा या ज्ञानावच्छेदकता रूपज्ञाननिरूपितत्वविशिष्टसमवायत्वावच्छिन्ना । स्वग्राहकज्ञानभूतरूपज्ञानं मत्समवेतं इत्याकारकज्ञाननिष्ठावच्छेदकता निरूपितसमवायनिष्ठावच्छेद्यता तु न तद्रूपावच्छिन्ना किन्तु समवायत्वावच्छिन्नैव । समवायस्यैकत्वेनैव रूपज्ञानसमवायस्य रूपज्ञानज्ञानीयत्वस्योक्तत्वात् ॥

अथ यज्ज्ञानं यदीयस्वभावं स तस्य विषय इत्यादिन्यायामृतमनूद्या द्वैतसिद्धावुक्तं " इति चेन्न । यदीयस्वभावमिति तद्धितस्य यद्विषयक त्वार्थकत्वे आत्माश्रयात् । अर्थान्तरस्य निरूपयितुमशक्यत्वात् । रूपज्ञानाभावाभावस्य रूपज्ञानरूपत्वेन रूपज्ञानस्यापि अभावीयतया तद्विषयतापत्तेः " इति ।

अत्र संबन्धविशेषत्वेन तद्धितार्थत्वे आत्माश्रयानवकाशः । रूप ज्ञानाभावाभावत्वेन रूपज्ञानस्याभावीयत्वेऽपि ज्ञानत्वेन तज्ज्ञानसंबन्ध विशेषनिरूपकत्वं तदीयत्वमित्यङ्गीकारे आपादनस्य नावाकाशः ॥

तस्मात् " दृश्यत्वं नाम दृगध्यस्तत्वमेव अन्यस्य निरूयितुमशक्यत्वात् " इति यदुक्तं तदसङ्गतम् । विषयविषयीभावस्य न्यायामृताचार्यनिरूपितस्य निर्दुष्टत्वात् ।

१. " परस्परासंयुक्तासमवेतविशेषणविशेष्यविषयका धीः विशेषणविशेष्यसम्बन्धविषयिका विशिष्टधीत्वात् दण्डीति

विशिष्टधीवत् । २. उक्ता जन्यप्रमा विशेषणविशेष्यसम्बन्धनिमित्तका अबाधितजन्यविशिष्टधीत्वात्सम्मतवत् । ३. विमता धीः अबाधित विशेषणविशेष्यसम्बन्धविषया अबाधितविशिष्टधीत्वात् दण्डीति विशिष्टधीवत् । गोमान् चैत्र इत्यादेरपि पक्षकुक्षिनिक्षेप इति न तत्र व्यभिचारशङ्का " इति न्यायामृतोक्तमनूद्याद्वैतसिद्धावुक्तम् । " प्रथमे द्वितीये चार्थान्तरम् । आध्यासिकसम्बन्धस्यैव विषयत्वेन निमित्तत्वेन चोपपत्तेः । द्वितीये परोक्षधीषु व्यभिचारः । तृतीये ब्रह्मज्ञान पर्यन्ताबाधितत्वेन सिद्धसाधनमेव । सर्वथा अबाधितविषयत्वे साध्य वैकल्यं " इति । तत्र आध्यासिकातिरिक्तत्वविवक्षायां नार्थान्तरम् । अपरोक्षविशिष्टधीत्वविवक्षायां न व्यभिचारः । आध्यासिकातिरिक्तत्वं अबाधितत्वं इति विवक्षायां न सिद्धसाधनावकाशः ॥

ज्ञानज्ञेययोः विषयविषयीभावस्सम्बन्धः इति तत्वमनङ्गीकृत्य अध्यस्तत्वमात्रं सम्बन्ध इति पराभ्युपगतिः । तदुपपादनावसरे उक्त मद्वैतसिद्धौ । " युतसिद्धयोरेव सम्बन्धदर्शनादयुतसिद्धिरपि समवायस्य बाधिका स्यादिति न वाच्यम् । युतसिद्धयोरपि क्वचित्सम्ब न्धादर्शनेन युतसिद्धत्वस्य सम्बन्धत्वाप्रयोजकत्वात् " इति । किञ्चोक्तं " यद्यप्युक्तन्यायसाम्येनाध्यस्तादीनां स्वप्रतियोग्यनुयोग्यादिभि स्तात्विकसम्बन्धोऽस्त्येव । अध्यासोऽपि न ज्ञानज्ञेयन्यायेन । उभयोरपि मिथ्यात्वात् । तथाऽपि प्रतीयमानं प्रतियोग्यनुयोगिभावादिकं सर्वथा न निराकुर्मः । किन्तु तात्विकाध्यासाभ्यां ज्ञेयकुक्षिनिक्षिप्तत्वात् मिथ्याभूतमङ्गीकुर्मः । स च सम्बन्धः संयोगादिवदतिरिक्तो वा स्वरूपं वा अङ्गीकृत्य पदार्थान्तरं वा तद्व्यतिरिक्तं वा स्यात् । काकदन्तपरीक्षायां न नोऽभिनिवेशः । न च मिथ्यात्वसिद्धेः प्राक् तदसिद्ध्या अन्योन्याश्रयः । दृग्दृश्यसम्बन्धानुपत्त्या ज्ञेयमात्रस्या

ऽऽध्यासिकत्वसिद्धौ तन्मध्यपतितस्य प्रतियोग्यनुयोगिभावादि सम्बन्धस्य मिथ्यात्वं" इति ।।

अत्र, विशेषणविशेष्यतया प्रतीयमानत्वे सति युतसिद्धत्वस्य सम्बन्धत्वप्रयोजकत्वेन दृष्टत्वात् प्रमाणान्तरस्यानावश्यकतया विशेषण विशेष्यतया प्रतीयमानत्वे सति पृथक्सिद्धत्वस्य वा समवाय बाधकत्वसम्भवात् यदुक्तं युतसिद्धत्वं अप्रयोजकमित्यादि तन्न ।।

किञ्च दृग्दृश्यसम्बन्धस्य विषयविषयीभावलक्षणस्यानुभवानुसारेण कल्पितस्य देशकालाभ्यां विप्रकर्षेऽपि तद्विषययोस्सम्बन्धोपपत्तेः ।।

आध्यासिकसम्बन्ध इत्यस्य कोऽर्थः । मिथ्याभूत इत्यर्थो वा अध्य स्ताधिष्ठानभाव इत्यर्थो वा । मिथ्याभूत इति पक्षे अस्य प्रपञ्चमिथ्या त्वसिद्ध्युत्तरभावित्वेनान्योन्याश्रयः । प्रपञ्चमिथ्यात्वन्तु नाद्यापि सिद्धम् । अध्यस्ताधिष्ठानभाव इति पक्षेऽपि ज्ञानस्याधिष्ठानत्व ज्ञेयस्य वा । ज्ञानस्याधिष्ठानत्वे चरमसाक्षात्काररूपज्ञाने ज्ञेयस्य ब्रह्मणो अध्यस्तत्वे मिथ्यात्वापत्तिः । ज्ञेयस्याधिष्ठानत्वे घटादिज्ञानेष्वपि तथात्वापत्त्या घटादेरधिष्ठानत्वेन सत्यत्वापत्तिः ।।

ज्ञानज्ञेययोस्सम्बन्धसामान्यव्यापकः देशकालविप्रकृष्टत्वाभावः । स च नास्ति । कुत इत्युक्ते ज्ञानस्य अन्तर्निष्ठत्वेन ज्ञेयस्य बहिर्निष्ठत्वेन अतीतत्वे भविष्यत्वे वा भिन्नकालत्वेन विप्रकृष्टत्वात्, तदभावरूप सम्बन्धसमान्यव्यापकाभावात् सम्बन्ध एव नास्ति, किन्तु आध्यासिक एवेत्यद्वैतिनां हृदयम् ।।

द्वैतवादिनां तु यथा तार्किकमते समवायसिद्धेः पूर्वं सम्बन्ध

सामान्यव्यापकं विशेषणविशेष्ययोर्भेदेनोपलभ्यमानत्वं तच्च रूप घटयोर्नास्ति अतो व्यापकाभावात् व्याप्यस्य सम्बन्धस्याभाव इत्युक्ते रूपी घट इत्यबाधितविशिष्टप्रतीतिबलात् संयोगसम्बन्धव्यापकमेव भेदेनोपलभ्यमानत्वं न तु सम्बन्धसामान्यव्यापकं इत्यङ्गीकृत्य समवायो स्थापितः, तथा ज्ञातो घटः घटस्य ज्ञानं इत्यबाधित प्रतीतिबलाद्देशकालविप्रकृष्टत्वाभावः संयोगसम्बन्धरूपसम्बन्धविशेष व्यापक इति किन्नाङ्गीक्रियते इति हृदयम् ॥

अद्वैतसिद्धावुक्तं " न चैवं ज्ञानज्ञेययोरपि प्रतियोग्यनुयोगिभावादि समकक्ष एव सम्बन्धोऽस्त्विति वाच्यम् । परस्पराध्यासात्मकसम्बन्धा सम्भवेनैव तत्सम्बन्धान्तरकल्पनात् । तत्सम्भवे तस्यैव सम्बन्धत्वात् । न चाज्ञानविषयस्य ब्रह्मणो विषयिण्यज्ञाने अनध्यासेन विषयस्य विषयिण्यध्यासनियमो न सिद्ध इति वाच्यम् । एवं नियमानभ्युपगमात् । किन्तु ज्ञानज्ञेययोरध्यास एव विषयेण सम्बन्धः । स च ज्ञाने ज्ञेयस्य अज्ञेये अज्ञानस्य अध्यासादुपपद्यते " इति ॥

एवमुक्तावपि ज्ञाने ज्ञेयस्याध्यास इति नियमोऽपि तन्मते नास्तीति भाति । " तञ्च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तः करणादिष्वध्यस्यति " इति तदीयभाष्ये ज्ञानरूपस्य चेतनस्यान्तः करणादिष्वध्यासाभ्युपगमात् । चरमसाक्षत्कारात्मकचैतन्यरूपज्ञाने ज्ञेयस्य ब्रह्मण अध्यासानभ्युपगमाच्च । एवं नियमाभावे विषयविषयिभावरूपस्वरूपसम्बन्धेनोपपत्तौ किमाध्यासिकसम्बन्ध कल्पनयेति नावगम्यते ।

एवं विकल्पाख्यवृत्तेरप्रामाणिकत्वेन असतोऽपि स्वव्यवहारविष यत्ववत् ज्ञानविषयत्वात् असतश्च ज्ञाने अध्यासः, अतीतादिविषयक

परोक्षज्ञाने अतीतादेरध्यासः, असद्विषयकज्ञानस्य ज्ञेये असत्यध्यासः, प्रातिभासिकस्य शुक्तिरूप्यस्य तज्ज्ञाने अध्यासश्च, कथं सम्भवेत् ॥

अद्वैतसिद्धावुक्तम् । अत एव चरमसाक्षात्कारस्य ब्रह्मण्यध्यस्तत्वाद्यदि तद्विषयत्वं तदा घटसाक्षात्कारस्यापि ब्रह्मण्यध्यस्तत्वात्तद्विषयत्वापत्तिरिति निरस्तम् ! घटसाक्षात्कारस्य घटाभिव्यक्तचैतन्यरूपत्वे ब्रह्मण्यनध्यासात् । वृत्तिरूपत्वे तस्याः ब्रह्मण्यध्यासेऽपि नाधिष्ठानभूतब्रह्मणो विषयत्वम् । ब्रह्मविषयताप्रयोजकस्याध्यासविशेषस्य तत्राभावात् । तस्य च फलबलकल्प्यत्वात् । न हि चरमवृत्तौ ब्रह्माकारतावदत्रापि साऽनुभूयते " इति ॥

अत्र, " सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते " इति स्ववचनविरोधः स्फुटः । चरमवृत्तौ ब्रह्माकारतावदन्यत्रवृत्तौ तन्नानुभूयत इत्येतद्भवदनुभवैकवेद्यम् ।

विषयत्वसम्बन्धस्यार्धाङ्गीकारेण ब्रह्मानन्दीये व्यख्यातम् । " यद्यपि ज्ञाने ज्ञेयस्येव अज्ञाने तद्विषयस्य तादात्म्यमेव न सम्बन्धः । किन्तु विषयताऽपि । तथाऽपि सा उक्ताध्यास एव । अधिष्ठानारोप्यगतत्वादिति भावः " इति । परोक्षस्थले अन्तःकरणवृत्तेर्बहिर्निस्सरणाभावेन तद्विषयिणी वृत्तिरेव भवतीति तन्मतरहस्यमित्युक्तं श्रीनिवासतीर्थैः । तथा च ज्ञानं स्वज्ञेयसम्बन्धशून्यं स्वज्ञेयविप्रकृष्टत्वादित्यनुमानस्य घटादिविषयकपरोक्षवृत्तौ व्यभिचार इत्युक्तं भवति । विमतं ज्ञेयं स्वज्ञाने अध्यस्तं ज्ञेयत्वात् इति हेतोः चरमसाक्षात्कारविषये ब्रह्मणि व्यभिचारः इत्युक्तं भवति ॥

अद्वैतसिद्धावुक्तं " न च घटस्य ज्ञानं इति धीसिद्धसम्बन्ध

सामान्यस्याऽध्यस्तत्वं न विशेषः । न हि रूप्यस्य शुक्तिरिति प्रतीतिरिति वाच्यम् । रूप्यस्य शुक्तिरिति प्रतीत्यभावेऽपि रूप्यस्य शुक्तिरधिष्ठानमिति प्रतीत्या अध्यस्तत्वस्य सम्बन्धविशेषत्वस्य सिद्धेः, चैत्रस्य मैत्र इति प्रतीत्यभावेऽपि चैत्रस्य पिता मैत्र इति प्रतीतिवत् " इति ।

तत्र, अधिष्ठानशब्दस्ससम्बन्धिकः । पित्रादिशब्दवत् । तत्र चैत्रस्येति षष्ठ्यर्थः निरूपितत्वं न सम्बन्धः । तथाच चैत्रनिरूपित पितृत्ववान् मैत्र इतिवद्रूप्यस्याधिष्ठानं शुक्तिरित्यत्रापि । अधिष्ठानत्वं भ्रमविशेष्यत्वम् । रूप्यनिरूपितभ्रमविशेष्यभूता शुक्तिः इति रूप्यस्य शुक्तिरधिष्ठानमित्यत्र बोधः । यथा पुरुषस्य दण्ड इत्यादौ पुरुषपदोत्त रश्रूयमाणषष्ठ्यर्थः सम्बन्धः दण्डांशे विशेषणतया भासते तथा रूप्यस्य शुक्तिरिति प्रतीतौ सत्यां शुक्त्यंशे रूप्यसम्बन्धो विशेषणतया भासेत । न चैवम् । तथाचाध्यासिकसम्बन्धस्य रूप्यस्य शुक्तिरिति प्रतीत्यभावेन सम्बन्धविशेषत्वं न सिद्ध्यत्येव । रूप्यस्य शुक्तिरधिष्ठानमिति प्रतीतिस्तु षष्ठ्यर्थतया निरूपितत्वावगाहिनी न सम्बन्धावगाहिनी ।।

## अथ जडत्वविचारः ।

न्यायामृते विकल्पितमनूद्याद्वैतसिद्धावुक्तं " तथाहि अज्ञानत्वं जडत्वमिति पक्षे नात्मनि व्यभिचारः । अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायात् । न च अभावे सप्रतियोगित्ववत् इच्छाज्ञानादिष्वपि सविषयकत्वस्य स्वाभाविकत्वात्, इच्छायामिव ज्ञाने सविषयत्वस्य स्वाभाविकत्वं इति वाच्यम् । ज्ञाने हि सविषयत्वं दृक्सम्बन्धः । स च न तात्विकः किन्तु आध्यासिकः । वक्ष्यमाणरीत्या तात्विकसम्बन्धस्य निरूपयितुमशक्यत्वात् । एवञ्च ज्ञानोपाधिक

सम्बन्धस्यैव विषयत्वस्येच्छादिष्वभ्युपगमात् न सुतरां तस्य तत्र स्वाभाविकत्वं " इति।

अत्र, घटमिच्छति घटं जानाति इति सर्वसिद्धानुभवानुसारेण इच्छाज्ञानयोः स्वविषयैः विषयविषयीभावस्य सम्बन्धत्वसम्भवेन आध्यासिकसम्बन्धकल्पने प्रमाणाभावः। एवमिच्छायां ज्ञानोपाधिकस्य विषयकत्वस्य कल्पने मानाभावः। अन्यथा संयोगसमवाययोरसम्भवेन पदपदार्थयोर्वाच्यवाचकभावः सम्बन्धः, हेतुसाध्ययोः व्याप्यव्यापक भावस्सन्बन्ध इति कल्पना तार्किकाणां न स्यात्। अर्थोपलक्षित प्रकाशात्मकज्ञानभिन्नत्वरूपजडत्वस्य दीपप्रकाशादौ अभावेन भागासिद्धिः। अर्थोपलक्षितप्रकाशात्मकज्ञानभिन्नत्वस्य तुच्छे सत्त्वेन व्यभिचारश्च ॥

अद्वैतसिद्धावुक्तं " ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वं च न स्वाभाविकम्। तथाहि। सज्ञेयत्वं तावत् ज्ञेयजन्यत्वं वा ज्ञेयव्याप्तत्वं वा। नाद्यः। परोक्षज्ञाने ईश्वरज्ञाने च बाधात्। नापि द्वितीयः। यदा ज्ञानं तदा अर्थ इति कालिकव्याप्तौ पूर्ववद्व्यभिचारात्। दैशिका व्याप्तिस्तु दूरनिरस्तैव इति ॥

अत्र, ज्ञानस्य सज्ञेयत्वन्नाम विषयतासम्बन्धेन ज्ञेयाभाववद्भि न्नत्वम्। यत्र यत्र ज्ञानत्वं तत्र तत्र विषयतासम्बन्धेन ज्ञेयाभाव वद्भिन्नत्वं इति व्याप्तेस्सत्त्वेन अन्यवाक्यकलापस्य व्यर्थत्वात् ॥

अद्वैतसिद्धावुक्तं " एवं सज्ञातृत्वमपि किं ज्ञातृजन्यत्वं ज्ञातृव्याप्यत्वं ज्ञातृसमवेतत्वं वा। आद्ये ईश्वरज्ञाने व्यभिचारः। ज्ञाननित्यत्वस्य

त्ववत् ज्ञातृसमवेतत्वस्याप्यसम्भवात् । ज्ञानस्य गुणत्वक्रियात्व योरनभ्युपगमेन द्रव्याश्रयत्वानुमानायोगात् कदाचित् ज्ञातृज्ञेय सम्बन्धेनैवानुभवस्य विवरणवाक्यस्य चोपपत्तेः । अस्ति ब्रह्मेति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्वमाह। नित्यत्वेन तदसम्भवात्। किन्तु साधुत्वार्थ इति द्रष्टव्यं " इति ।।

अत्र, सज्ञातृत्वमपि आश्रयतासम्बन्धेन कर्तृकारकाभाववद्भिन्नत्व व्याप्यज्ञानत्वकत्वं इत्यङ्गीकारे न बाधकमस्ति । ज्ञानस्य गुणत्वानङ्गीकारे ज्ञानस्य गुणत्वप्रतिपादकशास्त्रकारवचनविरोधः । भागवते प्रथमस्कन्धे " ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिस्स्मृतिः " । इत्यारभ्य " इमे चान्ये च भगवन्नित्या यत्र महागुणाः " इत्युक्तम् । ज्ञानस्य धात्वर्थरूपक्रियात्वन्तु घटमहञ्जानामी त्यबाधितव्यवहारत एव सिद्धम् । अस्ति ब्रह्मेत्यादौ सत्तानुकूलकृतिमत्वरूपकर्तृत्वस्य ब्रह्मसत्ताया अनादित्वेनासम्भवेऽपि सत्ताश्रयत्वरूपकर्तृत्वस्य ब्रह्मणि सम्भवात् । न च निर्धर्मकत्वेन ब्रह्मणस्सत्ताश्रयत्वं न सम्भवतीति शङ्क्यम् । बाध्यत्वाभावरूपसत्ताश्रयत्वस्य ब्रह्मणि संभवात् । उक्तञ्च ब्रह्मानन्दीये सदसद्विलक्षणत्वरूपमिथ्यात्वनिरुक्तौ " तथाच भावरूपधर्मानाश्रयत्वेऽपि बाध्यत्वाभावरूपधर्माश्रयत्वात् ब्रह्मणि नातिव्याप्तिः " इति । न च अनादिसत्तायां वर्तमानकालार्थक लट्प्रयोगानुपपत्तिः । क्रियाप्रबन्धे लट् इति विहितलटः सर्वकाला र्थकत्वेन पर्वतास्तिष्ठन्तीत्यादाविव सर्वकालार्थकत्वोपपत्तेः । न च ब्रह्मास्तीत्यत्र सार्वकालीनसत्ताश्रयं ब्रह्मेति बोधे ब्रह्मणो निर्धर्मकत्वात् निर्धर्मितावच्छेदककशाब्दबोधानङ्गीकारेणानुपपत्तिरिति शङ्क्यम् । निष्प्रकारकशाब्दबोधाङ्गीकारवादिनां निर्धर्मितावच्छेदककशाब्दबोधा भ्युपगमे बाधकाभावात् । अपूर्णत्वाभाववदस्तीति अपूर्णत्वाभावधर्मि

तावच्छेदककबोधस्य सम्भवात् धात्वर्थमुख्यविशेष्यकबोधस्य सम्भवाच्च। तस्मात् अस्ति ब्रह्मेत्यादौ आख्यातस्य साधुत्वमात्राश्रयणं व्यर्थम्॥

ईश्वरस्वरूपज्ञानस्य प्रमाऽप्रमोभयबहिर्भूतत्वेऽपि ज्ञानत्वोपपादनायाद्वैतसिद्धावुक्तं " ननु प्रमाभ्रमभिन्नं न ज्ञानम्। न च स्वरूपज्ञानं प्रमा। तद्विषयस्याविद्यादेस्तात्विकत्वापातात्। न चाप्रमा दोषाजन्यत्वात् इति चेन्न। तार्किकसिद्धेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्च स्वभावत उभयवैलक्षण्येनाप्युपपत्तेः। तत्रापि ईश्वरज्ञानस्यैव प्रमात्वे गुणजन्यत्वस्य, भ्रमत्वे दोषजन्यत्वस्य, चापत्तेः। निष्प्रकारके च तद्वति तत्प्रकारकत्वस्य तदभाववति तत्प्रकारकत्वस्य चानुपपत्तेः। जन्यसविकल्पकत्वेन भ्रमप्रमान्यतरत्वनियमे च अस्माकं क्षत्यभावात् " इति॥

अत्र, ज्ञानत्वव्यापकं प्रमाप्रमान्यतरत्वं इत्यत्र प्रमात्वञ्च विशेष्यावृत्तिधर्माप्रकारकज्ञानत्वं तद्भिन्नज्ञानत्वं अप्रमात्वं विवक्षितम्। एवं चेश्वरज्ञानस्य प्रमात्वोपगमोपपत्तेः। निर्विकल्पकज्ञानाङ्गीकारपक्षे निर्विकल्पकज्ञानस्य प्रमात्वोपपत्तिः। तत्प्रामाण्यमाप्तप्रामाण्यादिति गौतमसूत्रोपपत्तिश्च भवति। अतः आत्मस्वरूपज्ञानस्य प्रमाऽप्रमोभयबहिर्भूतत्वाङ्गीकरणं व्यर्थमेव। उक्तञ्च गदाधरभट्टाचार्येण सामान्यनिरुक्तौ " स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तत्तदनिरूपकत्वरूपस्य सर्वांशे याथार्थ्यस्य " इति। तद्वति तत्प्रकारत्वरूपं वा याथार्थ्यम्। अन्यद्वा जन्यसविकल्पकज्ञानविषयमिति वक्तुं शक्यत एव।

अद्वैतसिद्धावुक्तं " एवं आनन्दभिन्नत्वरूपं अनात्मत्वमप्युपपाद्यम्।

एवं वैषयिकानन्दस्यापि ब्रह्मरूपत्वात्" इति।

वैषयिकानन्दस्य ब्रह्मरूपत्वे वैषयिकानन्देषु तारतम्यप्रतीतेः निर्निमित्तं भ्रान्तित्वं कल्पनीयम्॥

परिच्छिन्नत्वविचारः।

अद्वैतसिद्धावुक्तं "परिच्छिन्नत्वमपि हेतुः। तच्च देशतः कालतः वस्तुतश्चेति त्रिविधम्। तत्र देशतः परिच्छिन्नत्वं अत्यन्ताभावप्रतियोगित्वम्। कालतः परिच्छिन्नत्वं ध्वंसप्रतियोगित्वम्। वस्तुतः परिच्छिन्नत्वं अन्योन्याभावप्रतियोगित्वम्। ननु समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वं आत्मनि व्यभिचारि। तस्याप्याकाशादिवत्क्वाप्यसमवेतत्वात्। संयोगसम्बन्धेनात्यन्ताभावप्रतियोगित्वं आकाशादावप्यसिद्धम्। तेषां परैर्नित्यत्वाभ्युपगमात्। अन्योन्याभावप्रतियोगित्वं चात्मनि व्यभिचारि। तस्य जडनिष्ठान्योन्याभावप्रतियोगित्वात्। अन्यथा जडत्वापत्तेरिति चेन्न। अत्यन्ताभावे अन्योन्याभावे च प्रतियोगिसमसत्ताकत्वविशेषणेनात्मनि व्यभिचारपरिहारात्। अज्ञानाकाशादौ च स्वसमानसत्ताकात्यन्ताभावान्योन्याभावप्रतियोगित्व सत्त्वेन असिद्ध्यभावात्। अविद्यादेर्व्यावहारिकस्य पारमार्थिकाभाव पक्षे स्वान्यूनसत्ताकेति विशेषणं देयम्। अत एव प्रातिभासिकरूप्यादेः व्यावहारिकाभावप्रतियोगित्वेन न साधनवैकल्यं इति।

अत्र, सत्तात्रैविद्ध्यानङ्गीकर्तृमते पारतन्त्र्येण ब्रह्मप्रतियोगकात्यन्ताभावस्य सर्वत्र सदात्वेन तादृशात्यन्ताभावस्य प्रतियोगिसमसत्ताकतया ब्रह्मण्यपि सत्त्वाद्व्यभिचारः। एवं (प्रतिवादिरीत्या) ब्रह्मप्रतियोगिकजडगतभेदस्य प्रतियोगिसमसत्ताकतया तादृशभेदप्रतियोगिनि

ब्रह्मणि व्यभिचारः । देशः सदा सर्वत्रास्ति कालः सदा सर्वत्रास्तीति प्रतीतिसिद्धयोर्देशकालयोः भागासिद्धिः । " अवकाशमात्रमाकाशः कथमुत्पद्यते । अन्यथा यद्यनाकाशतापूर्वं किं मूर्तनिबिडं जडं " इत्यादिना तान्त्रिकैस्साधितत्वात् ।

स्वान्यूनसत्ताकत्वनिवेशेन अविद्याकाशादौ शुक्तिरूप्यादौ च क्रमेणासिद्धिसाधनवैकल्ये परिहृते ह्यद्वैतसिद्धौ । स्वान्यूनसत्ताकत्वस्य सत्तात्रैविध्यसिद्धेः पूर्वमसिद्धतया तादृशविशेषणस्य निवेशयितुमशक्यत्वेन असिद्धिसाधनवैकल्ये दुर्वारे एव ।

घटस्सन्नित्यादिचाक्षुषप्रत्यक्षाणां ब्रह्मण एव विषयत्वं इति साधनायाद्वैतसिद्धौ न्यायामृतोक्तं अनूदितं " ननु सदर्थस्य ब्रह्मणः रूपादि हीनस्य आसंसारमज्ञानावृतस्य शब्दैकगम्यस्य कथं घटस्सन्नित्यादि बुद्धिविषयता स्यात् । तथा च घटोऽनित्यः इत्यनेन घटगतानित्यतेव घटस्सन्नित्यनेनापि घटगतं सत्त्वमेव गृह्यते । न च स्वरूपेणाप्रत्याक्षस्य राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटावच्छेदेनैव प्रत्यक्षतेति वाच्यम् । शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रवणत्वाद्यापातात् । राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य योग्यशुक्लभास्वरचन्द्रसम्बन्धात् चाक्षुषता युक्ता " इति । अस्याद्वैतसिद्धिसमाधानम् । तथाहि । " यतः सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वं किन्तु घटाद्यवच्छिन्नवृत्त्यात्मनैव । तथा च चक्षुरादि वृत्त्या तदावरणभङ्गे सति सन् घट इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात् । न च रूपादिहीनतया चाक्षुषाद्यनुपपत्तिर्बाधिकेति वाच्यम् । तत्र प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षायाः नियमात् । सर्वेन्द्रियग्राह्यन्तु सद्रूपं ब्रह्म । नातो रूपादिविहीनत्वे चाक्षुषत्वाद्यनुपपत्तिः । सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च " इति ॥

तत्र, ब्रह्मणः चाक्षुषत्वाभ्युपगमे 'न चक्षुषा पश्यति कश्चिदेनं, "औपनिषदः पुरुषः, नेन्द्रियाणि नानुमानम् । वेदाह्येवैनं वेदयन्ति, अतीन्द्रियं सूक्ष्ममिवातिदूरं अनन्तमाद्यं परिपूर्णमीडे' इत्यनेकप्रमाण विरोधः । घटोऽनित्य इत्यादाविव घटादिगतसत्त्वेनैव सन्घट इत्यादिप्रतीतिनिर्वाहे सद्रूपब्रह्मणः चाक्षुषादिप्रतीतिविषयताकल्पने मानाभावः । मिथ्याभूततद्वृत्त्युपहितब्रह्मविषयकत्वेन सन्घट इति प्रतीतेर्भ्रमत्वे वा तदधिष्ठानकत्वाभावात् । न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इत्युक्तेरपि घटादिगतसत्त्वपरत्वसम्भवात् । आत्मनो द्रव्यत्वं तान्त्रिकसम्मतम् । 'अणोरणीयान्महतो महीयान्' 'नात्मास्य जन्तोः निहितो गुहायां' इत्यादिश्रुतिसिद्धपरिमाणत्वेन द्रव्यत्वं सिद्धश्च। ब्रह्म रूपादिसापेक्षचाक्षुषप्रत्यक्षाद्यविषयत्वाभाववत् कल्पितद्रव्यत्व कत्वात् इत्यनुमानन्तु कल्पितद्रव्यत्ववति रूपादिगुणे व्यभिचारि ॥

## चतुर्थः परिच्छेदः ।

### सोपाधिकत्वविचारः ।

विमतं मिथ्या दृश्यत्वात् शुक्तिरूप्यवदित्यनुमाने प्रतिभासिकत्वं उपाधिरिति न्यायामृतोक्तस्य समाधानमुक्तं अद्वैतसिद्धौ । " प्रातिभासिकत्वं यदि ब्रह्मज्ञानेतरज्ञानबाध्यत्वरूपं तर्हि देहात्मैक्ये ब्रह्मज्ञानेतराबाध्ये साध्यव्यापकताभङ्गः । प्रतिभासमात्रशरीरश्चेत् दृष्टिसृष्टिपक्षे साधनव्यापकत्वं इति ।

तत्र, स्वविषयकप्रतीत्यनधिकरणकालासम्बन्धित्वं प्रातिभासिकत्वमित्यङ्गीकारे अनादावविद्यादौ न साधनव्यापकताभङ्गः दृष्टिसृष्टि पक्षेऽपि । प्रातिभासिकत्वञ्च स्वविषयकप्रतीतिप्रयुक्ताभिमान-

विशेषानाधिकरणकालासम्बन्धित्वं उभयवादिसिद्धदोषप्रयुक्तभानत्वं वा प्रातिभासिकत्वं इत्यङ्गीकारे देहात्मैक्येऽपि न साध्यव्यापकताभङ्गः। किञ्च " वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देहि " " क्व देहो भौतिकोऽनात्मा " " अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्य " इत्यादिप्रमाण बलात् ब्रह्मज्ञानेतरज्ञानेन देहात्मैक्यस्यापि बाधसम्भवात् देहात्मैक्ये शुक्तिरूप्यादिवत्प्रातिभासिकत्वाङ्गीकारे बाधकाभावः। यदि च न तथा अद्वैतसिद्धान्तः, किन्तु, ब्रह्मज्ञानेनैव बाध इत्युच्यते, तदापि स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वावच्छिन्नमिथ्यात्वरूपसाध्यव्यापकत्व—सम्भवेन प्रातिभासिकत्वस्य उपाधित्वमेव। न च वाच्यं उपाध्युन्नीत प्रतिपक्षानुमाने साध्यविशेषणस्य वैय्यर्थ्यम्। केवलमिथ्यात्वानुमितिप्रतिबन्धकत्वं विशिष्टमिथ्यात्वाभावज्ञानस्य न सम्भवतीति। विमतं स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वावच्छिन्नमिथ्यात्वाभाववत् प्रातिभासिकत्वाभावात् इत्युपाध्युन्नीतप्रतिपक्षानुमाने साध्य शरीरप्रविष्टावच्छिन्नत्वविशेषणस्य देहात्मैक्ये पराभिमते विपक्षे व्यभिचारवारणार्थत्वेन सार्थकत्वात्। अतः केवलमिथ्यात्वानुमिति प्रतिबन्धकत्वं अवच्छिन्नमिथ्यात्वाभावनिश्चयस्य युज्यत एव।

यद्युच्यते हेतोर्व्यभिचारवारणार्थं हेतुशरीर एव विशेषणं देयं न तु साध्यशरीर इति, तत्र शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारण गुणपूर्वकत्वात् इत्यनुमाने साध्यशरीरप्रविष्टस्य विशेषपदस्य साध्याभाववति अन्यतरकर्मजसंयोगे व्यभिचारवारणार्थतया सार्थक्यं तान्त्रिकैरुक्तं ध्येयम्॥

पूर्वपक्षः। स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वविशेषणस्य

साध्यशरीरप्रवेशे, इदं पक्षवृत्ति वा न वा । आद्ये साधनव्यापकत्वेन उपाधित्वहानिः । द्वितीये विशेषणासिद्धिरिति ।

समाधानम् । हेतुशरीरप्रविष्टव्यभिचारवारकविशेषणस्य पक्षावृत्तित्वेऽपि विशेषणासिद्धिदोषो नास्ति । अत एव कृतप्रायश्चित्त पुरुषीयदुरितप्रागभावरूपो विमतप्रागभावो विनाशी प्रमेयत्वात् इत्यनुमाने भावत्वं उपाधिरित्युक्त्वा प्रागभावे साध्यव्यापकताभङ्ग–माशङ्क्य जन्यत्वावच्छिन्नसाध्यव्यापकत्वमुक्तं अन्नंभट्टीयादौ नैय्यायिकैः । न च जन्यत्वस्य प्रागभावरूपपक्षवृत्तित्वं सम्भवति । उपाध्युन्नीतप्रतिपक्षानुमाने विमतप्रागभावो जन्यत्वावच्छिन्नविनाशा – भाववान् भावत्वाभावात् इत्यस्मिन् जन्यत्वरूपविशेषणस्य विमतप्रागभावरूपपक्षावृत्तित्वेऽपि न दोषः ॥

किञ्च ब्रह्मज्ञानेतरज्ञानबाध्यत्वाभावस्य प्रातिभासिकत्वाभावस्य अखण्डोपाध्यभावरूपत्वाच्च न वैय्यर्थ्यशङ्कावकाशः । तदेतत्सुधायां युक्तिपादे विष्णुतत्वनिर्णयटीकायां च समर्थितमिति नेह प्रपञ्च्यते ॥

किञ्च अधिष्ठानसमसत्ताकदोषप्रयुक्तभानत्वं चोपाधिः । अधिष्ठान समसत्ताकत्वं स्वजनकाज्ञानविषयावच्छेदकसमानसत्ताकत्वम् । ब्रह्मण्यारोपितक्षणिकत्वे, स्वं क्षणिकत्वं तज्जनकाज्ञानं ब्रह्म स्थिरत्वाज्ञानम् । तद्विषयावच्छेदकं स्थिरत्वम् । तत्समानसत्ताकत्वं दोषस्येति ॥

*****

# पञ्चमः परिच्छेदः ।

## सत्प्रतिपक्षितत्वविचारः ।

विमतं सत् परमार्थसद्वा प्रातिभासिकत्वानधिकरणत्वे सति असत्त्वानधिकरणत्वात् ब्रह्मवत् व्यतिरेकेण शशशृङ्गवत् इति सदनुमानेन बाधितं दृश्यत्वानुमानं इति न्यायामृतोक्तमनूद्य दूषणमुक्त मद्वैतसिद्धौ। " त्वन्मते प्रातिकभासिकस्याप्यसत्त्वेन व्यर्थविशेषणतया व्याप्यत्वासिद्धेः । अस्मन्मतमाश्रित्य हेतूकरणे च देहात्मैक्यस्यापि पक्षत्वे बाधः । नित्यत्वञ्चोपाधिः । तुच्छप्रतिभासिकयोर्नित्यत्व व्यतिरेकेण साध्यव्यतिरेकदर्शनात् " इति । ब्रह्मानन्दीये 'नित्यत्वं' अविनाशित्वमिति व्यख्यातम् ।

तत्र, तुच्छे अविनाशित्वरूपनित्यत्वव्यतिरेकः कथमिति चिन्त्यम् । पक्षातिरिक्तं परमार्थसत्त्वाभावनित्यत्वाभावयोर्व्याप्तिग्रहणस्थलं किमिति च चिन्त्यम् । किञ्च यदुक्तमद्वैतमतमाश्रित्य हेतूकरणमिति । तन्न । विमतं मिथ्येत्यनुमाने प्रतिभासिकत्वस्योपाधित्वेनोक्तत्वा त्तदभावमात्रस्य हेतूकरणे शशशृङ्गाद्यसति व्यभिचारापत्त्या तद्वारणायासत्त्वानाधिकरणत्वस्योपात्तत्वात् ।।

देहात्मैक्यस्यासत्त्वेन " देहात्मैक्यं यदि न तत् प्राप्तं प्रत्यक्षतः क्वचित् । मम देह इति ह्येव न देहोहमिति प्रमा " इत्यादिना साधितत्वात्।

विमतत्वरूपपक्षतावच्छेदकानाक्रान्तत्वेन देहात्मैक्ये बाध इत्येत दप्यसङ्गतमेव। देहात्मैक्यस्य आत्मत्वेनात्मविषयकप्रतीतिविषयत्वेन

आत्मरूपब्रह्मविषयकप्रतीतिविषयान्यकत्वलक्षणपक्षतावच्छेदकाना - क्रान्तत्वेन च बाधानवकाशः ।।

हेतोः प्रतिभासिकत्वरूपव्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धि रित्येतदप्यसङ्गतमेव । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरा- घटितस्य व्याप्यतावच्छेदकत्वं इति नियमादेव हि नीलधूमस्य व्यप्यत्वासिद्धिरभिहिता । प्रकृते प्रतिभासिकत्वाधिकरणत्वाभावत्वस्य स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरं अधिकरणत्वसामान्या- भावत्वं न सम्भवति । प्रातिभासिकत्वाधिकरणत्वाभावे अधिकरणत्व सामान्याभावत्वाभावात् नीलघटाभावे घटसामान्याभावत्वाभाववत् । तथा च प्रातिभासिकत्वाधिकरणत्वाभावत्वस्य स्वसमानाधिकरण व्याप्यतावच्छेदकधर्मान्तराघटितत्वेन व्याप्यतावच्छेदकत्वसम्भवात् नीलधूमस्येव प्रातिभासिकत्वानधिकरणत्वस्य व्याप्यत्वासिद्धत्वं न सम्भवति ।।

पूर्वपक्षः । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्य व्याप्यतावच्छेदकत्वं इति नियमोऽप्रामाणिकः । नीलधूमस्य व्याप्यत्वासिद्धत्वं व्यर्थविशेषणत्वादेव । तथा च नीलधूमत्वस्य हेतुतानवच्छेदकत्वं गुरुत्वादेव । अतः प्रातिभासिकत्वान- धिकरणत्वहेतोर्व्याप्यत्वासिद्धिः" इति ।।

समाधानम् । एवञ्चेद्वन्हिमान्धूमप्रागभावादित्यात्रापि धूम प्रागभावस्य व्याप्यत्वासिद्धत्वं स्यात् । धूमत्वापेक्षया धूम प्रागभावत्वस्य गुरुधर्मत्वात् । अतः स्वसमानाधिकरणेत्युक्त नियमोऽङ्गीकार्यः ।।

पूर्वपक्षः । धूमप्रागभावस्य व्याप्यत्वासिद्धौ इष्टापत्तिः । गुरुत्वादेव तस्य न हेतुतावच्छेदकत्वम् ॥

समाधानम् । एवं चेत् घटो रूपी पृथिवीत्वात् इत्यत्र पृथिवीत्वत्वस्यापि हेतुतावच्छेदकत्वं न स्यात् । तस्य गन्धवत्त्वापेक्षया गुरुत्वात् । अतः उक्तनियमोऽवश्यमङ्गीकरणीयः इति ।

पूर्वपक्षः । प्रातिभासिकत्वविशेषणस्य स्वरूपासिद्धिवारक विशेषणत्वेन ·हेतुगतविशेषणानां व्यभिचारवारकतयैव सार्थक्याङ्गीकारात् प्रातिभासिकत्वानधिकरणत्वरूपहेतोर्व्याप्यत्वासिद्धिः ॥

समाधानम् । एवञ्चेत् चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैव व्यञ्जकत्वात् इत्यनुमाने रूपस्यैव व्यञ्जकत्वादित्येवोक्तौ पक्षे चक्षुषि रूपेतरभूतरूपत्वव्यञ्जकत्वेन स्वरूपासिद्धिप्राप्तौ तद्वारकतया रूपादिषु पञ्चसु मध्ये इत्यस्य विशेषणस्य सार्थक्यमुक्तं तान्त्रिकैः । अतः प्रातिभासिकत्वानधिकरणत्वहेतोरसिद्धिवारकतया सार्थक्यं युक्तं इति ।

पूर्वपक्षः । यथोक्तं ब्रह्मानन्दीये । यादृशासिद्धौ सत्यां प्रकृतहेतौ प्रकृतसाध्यनिरूपितव्याप्तिग्रहो न जायते तादृशासिद्धिवारकविशेषणस्य व्यभिचारवारकविशेषणतुल्यत्वेन सार्थक्यं तदन्यासिद्धिवारक विशेषणस्य वैय्यर्थ्यमेव । प्रकृते प्रातिभासिकत्वरूपविशेषणाभावे सति स्वरूपासिद्धौ सत्यामपि अनधिकरणत्वमात्रहेतोः प्रकृतसाध्यपरमार्थ सत्त्वनिरूपितव्याप्तिग्रहणस्य ब्रह्मणि संभवेन एतादृशासिद्धिवारक विशेषणस्य व्यभिचारवारकविशेषणतुल्यत्वाभावेन व्यर्थविशेषणतया व्याप्यत्वासिद्धिः इति ।

समाधानम् । प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् इत्यनुमाने अनभ्यासदशायामिति विशेषणस्यानुपादाने स्वरूपासिद्धौ सत्यामपि सांशयिकत्वहेतौ परतो ज्ञायमानत्वरूप साध्येन व्याप्तिग्रहणस्य सम्भवेन अनभ्यासदशायामिति विशेषणस्य व्यभिचारवारकविशेषणतुल्यत्वाभावेऽपि केवलासिद्धिवारकतया सार्थक्यस्य तान्त्रिकैरुक्तत्वात् प्रकृतेऽपि तथा सार्थक्यं इति।

पूर्वपक्षः । अनभ्यासदशायामित्येतत्पक्षविशेषणम् । तस्मात्केवलासिद्धिवारकविशेषणस्यासार्थक्यमेव इति।

समाधानम् ।। एवञ्चेदयोगोलकं धूमाभाववत् आर्द्रेन्धनप्रभव वह्निशून्यत्वात् इत्यत्र आर्देन्धनप्रभवत्वरूपविशेषणानुपादानेऽपि वह्निशून्यत्वरूपहेतौ धूमाभावरूपसाध्यनिरूपितव्याप्तिग्रहणसम्भवेऽपि केवलासिद्धिवारकतया सार्थकत्वेन तान्त्रिकैरङ्गीकृतम् । तथैव प्रकृतेऽपि सार्थक्यम्। ब्रह्मान्यदनादि परमार्थसत् अनादित्वात् ब्रह्मवत् इति न्यायामृतोक्तानुमानदूषणावसरे अद्वैतसिद्धौ ध्वंसाप्रतियोगित्वं उपाधिरित्युक्तम् । व्यभिचारप्रसङ्गाभावेऽपि ध्वंसेतिविशेषणं दत्तं द्रष्टव्यम् । तथा ब्रह्मन्यद्वेदैकगम्यं धर्मादि परमार्थसत् श्रुतितात्पर्य विषयत्वात् इति न्यायामृतोक्तानुमानदूषणावसरे पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वस्योपाधित्वं उक्तम् । पारमार्थिकत्वविशेषणं केवालमसिद्धिवारणाय। तद्वदिहापि इति।

पूर्वपक्षः ।। क्वचिदसिद्धिवारकतया हेतुविशेषणस्य सार्थक्येऽपि हेतुगतविशेषणानां व्यभिचारवारकतयैव सार्थक्यमित्यभियुक्त वचनबलात् प्रकृते केवलासिद्धिवारकविशेषणस्य न सार्थक्यम्।।

समाधानम् । प्रातिभासिकत्वानधिकरणत्वविशेषणं व्यभिचार वारकविशेषणतुल्यम् । तथाहि । प्रातिभासिकत्वविशेषणत्यागेन अनधिकरणत्वमात्रस्य हेतुत्वे अनधिकरणत्वस्य अधिकरणत्वसामान्याभावरूपत्वेन अधिकरणत्वसामान्याभावे परमार्थसत्त्वरूपसाध्य निरूपितव्याप्तिग्रहणस्यासम्भवः । ब्रह्मणोऽप्यसत्त्वानधिकरणत्वरूप धर्माधिकरणत्वेन तादृशदृष्टान्ते व्याप्तिग्रहणायोगात् । तस्मात् व्याप्ति ग्रहोपयुक्तत्वेन सार्थक्यं इति।

पूर्वपक्षः। धर्म्यतिरिक्ताभावानभ्युपगमेन ब्रह्मणि असत्त्वाभावस्य वृत्त्यनियामकतादात्म्यसम्बन्धेन सत्त्वेऽपि वृत्तिनियामकसम्बन्धेन धर्माधिकरणत्वस्य ब्रह्मण्यभावात् वृत्तिनियामकतादात्म्यसम्बन्धेन ब्रह्मनिष्ठाधिकरणत्वसामान्याभावे परमार्थसत्त्वरूपसाध्यनिरूपित व्याप्तिग्रहणसम्भवेन प्रातिभासिकत्वविशेषणस्य व्याप्तिग्रहोपयोगित्वं नास्ति।

समाधानम् । वृत्त्यनियामकतादात्म्येनैव ब्रह्मणो धर्माधिकरणत्वमिति वक्तुं न शक्यते। अज्ञः कालकालः इति ब्रह्मान्दीयोदाहृतश्रुत्या, अज्ञानरूपकालाधारत्वस्य, तथा 'आश्रयत्वविषयत्वभागिनी निर्विशेष चितिरेव केवला' इति तदीयवचनेन च वृत्तिनियामकतादात्म्यसम्बन्धेन प्रतीतिः स्फुटा। किञ्च प्रातिभासिकत्वानाधिकरणत्वं नाम प्रातिभासिक भिन्नत्वरूपमेव विवक्षितम् । तत्र प्रातिभासिकत्वविशेषणस्य वैय्यर्थ्यशङ्कया अयोगेन न व्याप्यत्वासिद्धिः।

पूर्वपक्षः । क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवत् इत्यनुमाने शरीरजन्यत्वं उपाधिरित्यभिहिते उपाध्युन्नीतप्रतिपक्षानुमानस्य शरीराजन्यत्वस्य शरीररूपव्यर्थविशेषणघटितत्वात् व्याप्यत्वा-

सिद्धिरिति मणिकारेणोक्तम् । शरीरजन्यत्वाभावे जन्यत्वसामान्याभाव त्वस्यायोगेन स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितत्वेन शरीरजन्यत्वाभावत्वस्य व्याप्यतावच्छेदकत्वसम्भवेऽपि व्यर्थविशेषण घटितत्वेनैव व्याप्यत्वासिद्धिरिति मणिकारहृदयम् । तथैव प्रकृतेऽपि ।

समाधानम् । अनुमितिप्रयोजकव्याप्तिग्रहपक्षधर्मताग्रहोपयिक विशेषणं सार्थकमिति पूर्वसिद्धं न्यायं मणिकारोक्तत्वमात्रेण परित्यज्य प्रकृते व्याप्यत्वासिद्ध्यभिधाने कणादसूत्रीयस्य साध्यनिर्देशः प्रतिज्ञेति प्रतिज्ञालक्षणस्य प्रतिज्ञा न साध्यनिर्देशः इति मणिकारदूषितस्य भट्टाचार्यकृतदूषणोद्धारस्यापि त्याज्यत्वं स्यात् ॥

विमतं परमार्थसत् आरोपितमिथ्यात्वकत्वात् इति न्यायामृतोक्त हेत्वन्तरदूषणावसरे उक्तं अद्वैतसिद्धौ । " आरोपितत्वं प्रातिभासिक त्वञ्चेत् प्रपञ्चे हेतोरसिद्धिः । तत्सिद्धेः प्रपञ्चपारमर्थिकत्वसिद्ध्युत्तर कालीनत्वात् । व्यावहारिकत्वं चेत् शुक्तिरूप्ये व्यभिचारः । उभय साधारण्येप्ययमेव दोषः " इति । ब्रह्मानन्दीये व्याख्यातं " न च आरो-पितपदेन मिथ्यात्वेनोभयवादिसिद्धं वाच्यमिति चेन्न । जीवाणुत्वादि मिथ्यात्वस्य त्वया मया च मिथ्यात्वेन स्वीकारात् । तत्र व्यभिचारो मन्मतरीत्या दुर्वारः । मन्मते तस्य सत्यत्वाभावनिश्चयात् " इति ॥

अत्रेदं वक्तव्यम् । जीवाणुत्वस्य व्यावहारिकत्वे पक्षतावच्छेदका क्रान्तत्वेन तत्र व्यभिचारचोदनाया असङ्गतिः । तस्य प्रातिभासि-कत्वेऽपि न्न बाधकम् । आरोपितमिथ्यात्वकत्वात् इत्यस्य स्वाश्रयाधिक सत्ताशून्यत्वेनोभयवादिसिद्धमिथ्यात्वकत्वादित्यर्थः । जीवाणुत्वादिं मिथ्यात्वं तु स्वाश्रयाधिकसत्ताशून्यत्वेनोभयवादिसम्मतं न भवति ।

जीवाणुत्वस्य प्रातिभासिकत्वात् तन्मिथ्यात्वस्य व्यावहारिकत्वात् । एवं प्रपञ्चमिथ्यात्वन्तु उभयवादिसिद्धं सम्भवति । कथमित्युक्ते स्वं प्रपञ्चमिथ्यात्वं स्वाश्रयः प्रपञ्चः तत्सत्ताव्यावहारिकसत्ता तदधिकसत्ता शून्यत्वं प्रपञ्चमिथ्यात्वस्य सम्भवति । प्रपञ्चमिथ्यात्वस्यापि प्रपञ्च गतव्यावहारिकत्वेन परैरभ्युपगतत्वात् ।

मिथ्यात्वं नात्मान्यसर्ववृत्ति मिथ्यामात्रवृत्तित्वात् शुक्तिरूप्यत्ववत् इति न्यायामृतोक्तानुमाने मिथ्यात्वन्यूनवृत्तित्वं उपाधिरित्युक्तं अद्वैतसिद्धौ ।।

अत्र, असद्विलक्षणत्वे आत्मान्यशशश्रृङ्गवृत्तित्वाभावेन आत्मान्य सर्ववृत्तित्वाभावरूपसाध्यवति मिथ्यात्वन्यूनवृत्तित्वस्य (तथाच मिथ्या त्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति मिथ्यात्वाधि करणवृत्तित्वरूपस्य) उपाधेरभावात् साध्यव्यापकताभङ्गः । न च वाच्यं सद्विलक्षणत्वे मिथ्यात्वस्य सत्त्वेन असद्विलक्षणत्वे स्वस्मिन् स्वस्याभावेन मिथ्यात्वन्यूनवृत्तित्वमस्त्येवेति न साध्यव्यापकताभङ्ग इति । असद्विलक्षणत्वे असद्विलक्षणत्वस्याभावे असद्विलक्षणत्वं असन्नेति प्रतीत्यनुपपत्या असद्विलक्षणत्वे असद्विलणत्वस्याङ्गीकर-णीयतया मिथ्यात्वाधिकरणीभूतासद्विलक्षणत्वे विद्यमानो यो भेदः असद्विलक्षणत्ववद्भेदो न भवतीति मिथ्यात्वाधिकरणनिष्ठभेद प्रतियोगितावच्छेदकत्वे सति मिथ्यात्वाधिकरणवृत्तित्वरूपं मिथ्यात्व न्यूनवृत्तित्वं असद्विलक्षणत्वे नास्तीति साध्यव्यापकताभङ्ग एव ।।

ब्रह्मानन्दीये असद्विलक्षणत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वा-दरेतु सुतरां न दोषः । प्रमेयत्वादेः स्ववृत्तित्वमतेऽपि

साध्यव्यापकत्वमक्षतं " इत्युक्तम् । तच्चिन्त्यम् । साध्यव्यापकता भङ्गोद्धारप्रकारानिरूपणात् ॥

यदपि पक्षभूतमिथ्यात्वं विकल्प्य दूषणमुक्तम् । तदपि न । सद्विलक्षणत्वं मिथ्यात्वमित्यङ्गीकारात् । न च तत्र सन्दिग्धानैकान्त्यं आत्मभेदे उक्तमिति वाच्यम् । तत्र आत्मपदेन जीवविवक्षायां शुद्ध ब्रह्मणि जीवादेर्भेदस्य सत्त्वात्, आनन्दो ब्रह्मणो धर्म इत्यादिभेदस्य व्यवहारकालाबाध्यत्वाच्चेति विश्वसत्यत्वानुमानभङ्गे ब्रह्मनन्दीयोक्त रीत्या आत्मशब्दोक्तजीवत्वावच्छिन्नप्रतियोगिताकभेदस्य शुद्धब्रह्मणि सत्त्वेन मिथ्येतरावृत्तित्वाभावेन आत्मभेदे मिथ्यामात्रवृत्तित्वरूप हेतोरभावात् न व्यभिचारः । यदि च आत्मपदेन शुद्धपरिग्रहः तदापि तुल्यन्यायेन शुद्धब्रह्मभेदस्य जीवेष्वपि सत्त्वेन आत्मभेदे मिथ्येतरावृत्तित्वाभावेन हेत्वाभावात् न व्यभिचारः । उभयसाधारणा त्मविवक्षायां च उभयवादिसिद्धमिथ्यामात्रवृत्तित्वस्य हेतुत्वेन विवक्षायां नात्मभेदे सन्दिग्धानैकान्त्यम् इति ।

आत्मा परमार्थसदन्यः पदार्थत्वात् इति न्यायामृतोक्तानुमान दूषणावसरे अद्वैतसिद्धावुक्तं "न च कल्पितात्मप्रतियोगिकभेदेन अर्थान्तरम् । कल्पितमिथ्यात्वेन मिथ्यात्वानुमानेऽपि सिद्धसाधना- पत्तेरित्यपि न । व्यावहारिकपदार्थमादाय सिद्धसाधने अतिप्रसङ्गा- भावात् । अनानन्दत्वस्य उपाधित्वाच्च " इति ।

अत्र व्यावहारिकत्वं ब्रह्मज्ञानमात्रबाध्यत्वरूपं चेत् अस्यैव कल्पितत्वेन कल्पितेन भेदेन सिद्धसाधने मिथ्यात्वानुमानेऽपि मिथ्यात्वेन प्रवादविषयत्वरूपं मिथ्यात्वं इति परिकल्प्य कल्पित

मिथ्यात्वेन सिद्धसाधनसम्भवात् । धर्मिसत्तासमानसत्ताकभेदसाधने न सिद्धसाधनम् । अनानन्दत्वस्य अप्रयोजकत्वेन उपाधित्वं न सम्भवति । प्रकृतानुमानेषु अनुकूलतर्कस्य वक्ष्यमाणत्वेनोपाधेस्साध्य व्यापकताभङ्गश्च ॥

आत्मा यावत्स्वरूपमनुवर्तमानानात्मवान् पदार्थत्वात् घटवत् इति न्यायामृतोक्तानुमानदूषणावसरे अद्वैतसिद्धावुक्तं " यावत्स्वरूप-मित्यस्य यत्किञ्चित्स्वरूपपरत्वे सिद्धसाधनम् । आत्मस्वरूपपरत्वे साध्याप्रसिद्धेः । न हि यावदात्मस्वरूपमनुवर्तमानोऽनात्मा प्रसिद्धोऽस्ति । अनुमानवैय्यर्थ्यात् । अथ स्वरूपपदस्य समभिव्याहृत परत्वात् व्याप्तिग्रहणदशायां चात्मस्वरूपमेव प्राप्यते इति न साध्याप्रसिद्धिः न वा सिद्धसाधनं इति चेन्न । शब्दस्वभावोपन्या-सस्यानुमाने अनुपयोगात् । स्वज्ञानाबाध्येत्यत्र स्वशब्देऽपि तुल्योऽयं दोषः" इति ॥

तत्र स्वपदस्य समिभिव्याहृतपदार्थतावच्छेदकावच्छिन्ननिरूपित व्याप्तेः सर्वोपसंहारेण हेतौ ग्राहकमिन्द्रियं श्रोत्रं स्वीयमित्यादौ सिद्धत्वेन शब्दस्वभावोपन्यासस्य अनुमानेऽनुपयोगादित्युक्तं कथं सङ्गतम् । यो यस्य सुतः स तदीयं धनमर्हतीत्यादौ यत्तत्वादेरननुगतत्वेऽपि सार्वत्रिक व्यवहारोपयुक्ततया, विवक्षितबुद्धिविषयतोपलक्षिततत्तद्धर्मावच्छिन्न परतया निर्णीतत्वात् । अन्यथा विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तर-पूर्वकं अप्रकाशितार्थप्रकाशकत्वात् इत्यादावपि तौल्येन उभयसमाधेयत्वात् ॥

ब्रह्मान्यानादि परमार्थसत् अनादित्वात् ब्रह्मवत् इति न्यायामृतोक्तानुमानमनूद्य अद्वैतसिद्धावुक्तम् । "इत्यपि न भद्रम् । ध्वंसाप्रतियोगित्वस्य उपाधित्वात्" इति ॥

अत्र ब्रह्मणो निर्धर्मकत्वेन अप्रतियोगित्वस्यैवोपाधित्वोपपत्तेः ध्वंसेति विशेषणं व्यर्थम् । प्रतिपक्षानुमाने ब्रह्मान्यानादि परमार्थसन्न भवति ध्वंसाप्रतियोत्वाभावात् इत्यस्मिन् ध्वंसेति विशेषणस्य व्यभिचारावारकतया त्वदुक्तरीत्या व्याप्यत्वासिद्धिः । वादिरीत्या घटादौ व्यभिचारः । भावत्वे सत्यनादित्वस्य हेतुतया विवक्षितत्वेन प्रागभावस्य व्यावर्तितया उपाधेः साधनव्यापकत्वात् । न च भावरूपाज्ञाने भावत्वे सत्यनादित्वं वर्तते ध्वंसाप्रतियोगित्वं नास्तीति साधनाव्यापकत्वं प्राप्तं इति वाच्यम् । साक्षाज्ज्ञानप्रयोज्यनिवृत्तिमद्भिन्नभावत्वे सत्यनादित्वस्य हेतुतया विवक्षितत्वेन भावरूपाज्ञानमपि व्यावर्तितं इति साधनव्यापकत्वमेव ध्वंसाप्रतियोगित्वस्योपाधेः ॥

किञ्च 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः' इत्यभियुक्तवचनेन वक्ष्यमाणानुकूलतर्केण चास्य नोपाधित्वं सम्भवति ॥

ब्रह्म देशकालासम्बद्धं नावतिष्टते पदार्थत्वात् घटवत् इति न्यायामृतोक्तानुमाने अद्वैतसिद्धावुक्तं "परममुक्तौ तु न देशो नकालश्चेति सुस्थिरं सिद्धसाधनं" इति ॥ ('सिद्धसाधनं इत्येतत्प्रामादिकं भाति)

तत्र कदा परममुक्तिरिति प्रश्नस्य निरुत्तरत्वापत्त्या 'यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदि स्थिताः अथ मर्त्यो अमृतो भवति' 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान

पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्याद्यनेकप्रमाण विरुद्धत्वेन परममुक्तौ देशकालासत्त्वकथनं न सङ्गतमेव ॥

ब्रह्मन्याद्वेदैकगम्यं धर्मादि परमार्थसत् श्रुतितात्पर्यविषयत्वात् ब्रह्मवत् इति न्यायामृतोक्तानुमानमनूद्याद्वैतसिद्धावुक्तम् । "इत्यपि न साधु । पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वस्योपाधित्वात्" इति ।

अत्र स्वयमेवोपाध्युन्नीतप्रतिपक्षानुमाने व्यर्थविशेषणत्वात् व्याप्यत्वासिद्धिरित्युक्तस्य विस्मरणमूलकमेवेदमिति ज्ञायते । तथाहि । उपाध्युन्नीतप्रतिपक्षानुमानं ब्रह्मान्यद्वेदैकगम्यं धर्मादि परमार्थसन्न भवति पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वाभावात् इत्येतद्रूपम् । तत्र श्रुतितात्पर्यविषयत्वाभावरूपस्यैव हेतुत्वसम्भवेन पारमार्थिक-त्वांशस्यासिद्धिवारकतया असिद्धिवारकविशेषणस्य व्यर्थताया स्वय मेवोक्तत्वेन व्यर्थविशेषणघटितत्वाद्व्याप्यत्वासिद्धिः । प्रतिपक्षानुमाने प्रतिवादिरीत्या स्वरूपासिद्धिश्च ॥

साक्षिवेद्यं सुखादि परमार्थसत् अनिषेध्येन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात् आत्मवत् इति न्यायामृतोक्तानुमानमनूद्याद्वैत सिद्धावुक्तं "इत्यपि न । शुक्तिरूप्यादिषु व्यभिचारात् । तेषां दोषजन्यवृत्तिविषयत्वेऽपि दोषाजन्यसाक्षिविषत्वात् । शुद्धस्य वृत्तिविषयत्वानभ्युपगमे दृष्टान्तस्य साधनवैकल्याच्च" इति ॥

तत्र अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वादित्यस्य प्रातिभासिकान्यत्वे सति सत्त्वेन ज्ञानविषयत्वादित्यर्थकतया इतरांशस्य स्पष्टार्थत्वेन व्यभिचारानवकाशात् । ब्रह्मणो वृत्ति विषयत्वानभ्युपगमे "औपनिषदः पुरुषः" "वेदाह्येवैनं वेदयन्ति"

"वेदैश्च सर्वैरहमेव वेद्यः" इत्याद्यनेकप्रमाणविरोधप्रसङ्गः । विशिष्ट विषयकाहमाकारवृत्तेश्शुद्धात्मा विषय इति विश्वसत्यत्वानुमानभङ्गीय ब्रह्मानन्दीयवचनेन विरोधापत्त्या दृष्टान्ते साधनवैकल्यानवकाश एव ॥

विमतं परमार्थसत् स्वज्ञानात्पूर्वभावित्वात् आत्मवत् इत्यनुमानमनूद्याद्वैतसिद्धावुक्तं "इत्यपि न । दृष्टिसृष्टिपक्षे असिद्धेः । विषमव्याप्तस्याप्यनादित्वस्योपाधित्वाच्च" इति ॥

तत्र, दृष्टिसृष्टिपक्षस्य प्रतिकर्मव्यवस्थायोगेनायुक्तत्वस्य भवदीयैरेवो क्तत्वात् । विषयव्याप्तस्योपाधित्वं तु "साधनव्यापकास्साध्यसमव्याप्ता- उपाधयः" इत्युदयनाचार्यविरोधात् उक्तदूषणमसङ्गतम् ॥

अन्योन्याभावातिरिक्तएतद्घटसमानाधिकरणएतद्घटाभाववत्वं एत द्घटसमानकालीनावृत्ति अन्योन्याभावातिरक्तएतद्घटसमानाधिकरण एतद्घटप्रतियोतिकाभावमात्रवृत्तित्वात् एतद्घटप्रागभावत्ववत् इति न्यायामृतोक्तानुमानमनूद्याद्वैतसिद्धौ लिखितम् । "इत्यपि न । साधनाव च्छिन्नसाध्यव्यापकस्य एतद्घटप्रतियोगिकजन्यजनका (ध्वंसप्रागभावा) न्यतरमात्रवृत्तित्वस्य उपाधित्वात् । घटात्यन्ताभावत्वे च व्यभि- चारात्। संयोगसम्बन्धेन घटवत्यपि भूतले समवायसम्बन्धेन घटात्यन्ताभावस्य सत्त्वात् साध्याभाववति हेतोर्वृत्तेः" इति ॥

अत्र, एतद्घटात्यन्ताभावत्वे उपाधेस्साध्यव्यापकताभङ्गः । तथाहि । नवीनास्तार्किका आहुः । भूतले विद्यमानो घटात्यन्ताभावो नित्य इति । तस्य नित्यत्वे घटसत्तादशायां घटो नास्तीति व्यवहारः स्यादिति शङ्कायां स्वप्रतियोग्यनधिकरणकालीनत्वविशिष्टदैशिकविशेषणता सम्बन्धेन सत्त्व एव 'नास्तीति' धीः व्यवहारश्च, इति समाहितम् ।

एवं भूतलगतनित्यभूतो घटात्यन्ताभावः ध्वंसप्रागभावाधिकरणकपालेऽपि वर्तते। अत्यन्ताभावस्य एकत्वात्, ध्वंसप्रागभावाधिकरणे नात्यन्ताभावः इति प्राचीनन्यायं नैतेऽभ्युपगच्छन्ति। तेषां मते ध्वंसप्रागभावाधिकरणे कपाले विद्यमानः योऽयमत्यन्ताभावः तद्वृत्यभावत्वे एतद्धटप्रध्वंसप्रागभावान्यतरमात्रवृत्तित्वरूपोपाधिर्नास्ति एतद्धटसमानकालीनावृत्तित्वं वर्तत इति साध्यव्यापकताभङ्गः। एतद्धटध्वंससमाकालीनएतद्धटात्यान्ताभावपदावाच्यत्वे साधनावच्छिन्नसाध्यस्य सत्त्वेऽपि उपाधेरभावात् साध्यव्यापकताभङ्गश्च ॥ यदुक्तं संयोगसमवायविवक्षया घटात्यन्ताभावत्वे व्यभिचारः इति तदतीव मन्दं सुलभसमाधानं च॥

उभयत्र समानसम्बन्धनिवेशे व्यभिचारस्य नावकाशः। संयोगेन घटवति समवायेन घटात्यन्ताभावश्च आधेयतावच्छेदकीभूतसंयोग सम्बन्धावच्छिन्नघटनिष्ठप्रतियोगिताकात्यान्ताभावो न भवतीति तद्वृत्यन्ताभावत्वे न व्यभिचारः॥

किञ्च विशेष्यवत्तया निश्चिते अधिकरणे विशिष्टस्य यो अभावः तस्य विशेषणाभावस्वरूपत्वमेवेति विश्वसत्यत्वानुमानभङ्गीयब्रह्मानन्दीयोक्तरीत्या संयोगेन घटवति समवायसम्बन्धवच्छिन्नघटनिषेधस्य समवायनिषेधस्वरूपतया तादृशात्यन्ताभावस्य घटप्रतियोगिकत्वमेव नास्ति। अतो न व्यभिचारः॥

न च ध्वंसप्रागभावयोः संसर्गावच्छिन्नप्रतियोगिताकत्वं नेति पक्षे दृष्टान्तस्य साधनवैकल्यं इति शङ्क्यम्। एतद्धटनिष्ठाधेयतावच्छेदक सम्बन्धान्यसम्बन्धानवच्छिन्नएतद्धटनिष्ठप्रतियोगिताकाभावमात्रवृत्ति

त्वादिति हेत्वर्थविवक्षायां न व्यभिचारो, न साधनवैकल्यम् ॥

## षष्ठः परिच्छेदः ।

### आगमार्थविचारः ।

अद्वैतसिद्धावुक्तं "नन्वस्तु शब्दबाधः । तथा हि । विश्वं सत्यं मघवानायुवोरिदापश्चन प्रमिनन्ति व्रतं वां' 'यच्चिकेत सत्यमित्तन्न मोघं वसुस्फार्हमुत जेतोत दाता' कविर्मनीषी परिभूः स्वयंभूः याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः' इत्यादिश्रुतिभिः । 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरं' इत्यादिस्मृतिभिः । 'नाऽभाव उपलब्धेः' 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यादिसूत्रैश्च विश्वस्य सत्यत्वप्रतिपदनात् इति चेन्न । श्रुतेः तत्परत्वाभावात्''इति । 'किञ्च तथाहि' इत्यारम्य ऋक्संहिताद्वितीयाष्टकवाक्यानुवादपूर्वकं 'च न' इत्येतत्पदद्वयसमुदायः ऐकपद्यं त्वध्यापकसम्प्रदायसिद्धमित्युक्त्वा वाक्यार्थं चाभिधाय "तथा च स्तुतिपरत्वात् नास्य विश्वसत्यत्वे तात्पर्यं इत्युक्तम् । एवं 'यच्चिकेत सत्यमित्तन्न मोघं इति वाक्यार्थानुवादपुरस्सरं, "एवमेवान्यदपि सत्यत्वप्रतिपादकवाक्यमुन्नेयम् । 'यथातथ्यतोर्थान् व्यदधाच्छाश्वतीभ्यः' इति वाक्यमपि न प्रपञ्चसत्यत्वे प्रमाणम् । तस्य पूर्वसृष्टप्रकारेण सर्जनमर्थः । न तु जगत्सत्यत्वं, जगत्सर्जनगतसत्यत्वं वा'' इत्युक्तम् ॥

ब्रह्मानन्दीये तु यथातथ्येति प्रतीकमुपादायोक्तम् । "यद्यपि दूष्ये न्यायामृते ग्रन्थे, याथातथ्यत इतीशावस्योपनिषद्गतं वाक्यं धृतम् । तथाप्यर्थतौल्येन श्रुत्यन्तरस्थयथातथेति वाक्यं धृतं, पूर्वसृष्टेति । ननु याथातथ्येत्यस्य नायमर्थो युक्तः 'तथा' शब्दस्यैवाभावात्किन्त यथार्थन्त

यथातथं इत्यमरोक्तेर्यथातथशब्दस्य सत्यार्थकत्वेन स्वार्थिक तद्धितान्तत्वेन च सत्यार्थकत्वमिति चेन्न । तथ्यशब्दस्यापि सत्यार्थकत्वेन याथेत्यस्य व्यर्थत्वापत्तेः । तस्माद्भावार्थकस्तद्धितः । ल्यब्लोपपञ्चम्यास्तसिल्प्रत्ययः । तथा च पूर्वसृष्टा अर्थाः यथा तथाभावं प्रतिसान्धाय व्यदधात् इति वाक्यार्थः । यथातथोऽर्थानिति वाक्येऽपि त्वन्मते यथेति पदं व्यर्थम् । तथाशब्दस्य सत्यार्थकत्वेऽपि यथाशब्दस्य तदभावात् । तथाशब्दस्य तथ्यपदप्रकृतित्वेन, तथागते त्यस्मिन्बौद्धनामनि तथाशब्दस्य सत्यार्थकतायाः प्रामाणिकैरुक्तत्वात्" इति ॥

तत्र, गुणाभिधानरूपस्तुतिरूपतामात्रेण स्वार्थपरत्वाभावे "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यस्य "पूषन्नेकर्षेयमसूर्यप्राजापत्य व्यूहरश्मीन्समूहयत्तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि" इत्यादीनामपि स्तुतित्वापत्त्या वाक्यार्थे कुत्रापि तात्पर्याभावः स्यात् । अतोऽबाधिते स्वार्थे तात्पर्यमवश्यकमेव । प्रकृते विश्वसत्यत्व श्रुतेरबाधितार्थकत्वेन स्वार्थे विश्वसत्यत्वे तात्पर्यसम्भवात् विश्वमिथ्यात्वप्रतिपादकत्वेनाभिमत 'नेह नानास्ति किञ्चने'त्यादिश्रुति वाक्यस्यान्यार्थकत्वेन मिथ्यात्वार्थकत्वाभावात् 'कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः' इति ईशावास्योपनिषन्मन्त्रे याथातथ्यपदेनार्थानामतिशयितसत्यत्व मेवाभिहितम् । तथाहि । याथार्थ्यं अबाधितार्थकत्वम् । यथाशब्दस्य सत्यर्थकत्वात् इति ब्रह्मानन्दीये आगमबाधोद्धारे अभिहितम् । 'तथा' शब्दस्यापि 'तथागतः' इत्यस्मिन्बौद्धनामनि सत्यार्थकत्वस्य प्रामाणिकैरुक्तत्वादिति ब्रह्मानन्दोक्तरीत्या सत्यार्थकत्वेन द्विर्वचनम तिशयार्थे इत्यभियुक्तवचनबलादतिशयितं सत्यं पारमार्थिकसत्यमेव ।

तथाच भावार्थप्रत्ययेनार्थानां पारमार्थिकसत्यत्वरूपलक्षण सूचनपूर्वकमर्थानां सृष्टिरुक्ता भवति । "यादृशं ब्रह्मणस्सत्वं तादृशं स्याज्जगत्यपि" इति न्यायामृते उदाहृतम् । "अशक्तास्सत्यसृष्टौ हि मायासृष्टिं वितन्वते" इति प्रमाणानुसारेण सत्यजगत्सृष्ट्युक्त शक्तिबोधकतया कविरित्यादिविशेषणानां सार्थक्यम् ॥

"ससत्यं जगदेतादृक् नित्यमेव प्रवाहतः । नियमेनैव ससृजे भगवान्पुरुषोत्तमः"इत्यादिप्रमाणानुसारेण पूर्वसदृशतथ्ययोर्भावः यथातथ्यं तदनुसृत्येयेति व्याख्याने "धाता यथा पूर्वमकल्पयत्"इति श्रुत्यानुकूल्यसिद्ध्या याथेत्यस्य वैय्यर्थ्याभावात् ब्रह्मनन्दीयोक्तदूषणं असङ्गतमेव । क्वचित् 'यथा' शब्दस्य सत्यार्थकत्वलेखनं क्वचित् सत्यार्थकत्वाभावलेखनं च ब्रह्मानन्दीये व्याहतश्च ॥

अद्वैतसिद्धौ"ननु उत्सर्गापवादन्यायोऽस्तु" इत्यारभ्य'नेह नानास्ति किञ्चन' 'विश्वं सत्यं मघवा नायुवोरित्' इत्यादिवाक्ययोः 'न हिंस्यात्सर्वाभूतानि' 'अग्नीषोमीयं पशुमालभेत' इति वाक्यद्वय तुल्यतामुपपाद्योक्तम् । "इतिचेन्मैवम् । अग्नीषोमीयवाक्यस्य निषेध्य विषयन्यूनविषयकत्वेनानन्यशेषतया स्वार्थतात्पर्यकत्वेन च निषेध्य समर्पणद्वारेण न निषेधवाक्यशेषत्वम् । विश्वं सत्यं इत्यादेस्तु निषेध्य विषयसमविषयत्वे स्वार्थतात्पर्यरहितत्वेन च निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषता उचितैव" इति ॥

तत्र, अग्नीषोमीयवाक्यस्य यथा न हिंस्यात्सर्वाभूतानीति वाक्य विषयन्यूनविषयत्वं तथा नेह नानास्ति किञ्चनेति वाक्यविषय सर्वमिथ्यात्वन्यूनविषयत्वं विश्वं सत्यं मघवानायुवोरित् इति वाक्यस्य

सम्भवत्येव । हे मघवानौ धनादिमन्तौ हे इन्द्रबृहस्पती युवोः युवयोः सम्बन्धि विश्वं सत्यमित् सत्यमेवेति मघवशब्दोक्तभगवत्सम्बन्धि विश्वमात्रसत्यत्वप्रतिपादकत्वेन केवलविश्वमिथ्यात्वपरवाक्यापेक्षया न्यूनविषयकत्वादन्यूनविषयकत्वं यदुक्तं तदसङ्गतमेव ॥

## सप्तमः परिच्छेदः ।

प्रतिपन्नोपाधौ सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं वा स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वं वा मिथ्यात्वं वा इत्यस्योपोद्बलकतया 'अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् पटत्वात्पटान्तरवत्' इति चित्सुखोक्तमनुमानम् । तद्दूषणावसरे न्यायामृते एतत्तन्त्वनारब्धत्वं उपाधिरित्युक्तम् । अद्वैतसिद्धौ तत्परिहारकतयोक्तम् । अत एव एतत्तन्त्वनारब्धत्वं नोपाधिः । उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने सोपाधिकत्वस्योक्तत्वात्" इति । उपाध्युन्नीतप्रतिपक्षानुमानदौष्ट्य प्रयोजकसोपाधिकत्वप्रकारनिरूपणात्पूर्वं क्षणं चिन्त्यते किमिदमनिष्टं प्रतिपक्षानुमानस्य सोपाधिकत्वम् । उपाधिमात्रस्य प्रतिपक्षोन्नायकत्व स्वाभाव्येन प्रतिपक्षानुमानस्य सोपाधिकत्वे पुनस्तद्व्यतिरेकमुख प्रतिपक्षानुमानं उन्नीतं भवति । तत्प्रकृतानुमानान्न भिद्यते इति । आस्तामेतत् । प्रतिपक्षानुमानस्य सोपाधिकत्वोक्तावयं परकीयभावः । एतत्तन्त्वनारब्धत्वरूपोपाध्युन्नीतप्रतिपक्षानुमाने अयं पटः एतत्तन्तु निष्ठात्यन्ताभावप्रतियोगी न एतत्तन्त्वनारब्धत्वाभावात् व्यतिरेकेण पटान्तरवत् इत्यनुमानरूपे व्यतिरेकव्याप्तौ एतत्तन्तुनिष्ठप्रागभावा प्रतियोगित्वं उपाधिः । कथमित्युक्ते एतत्तन्त्वनारब्धत्वाभावः एतत्तन्त्वारब्धत्वम् । स एव हि प्रतिपक्षे हेतुः । तदभावः व्यतिरेकव्याप्तौ

व्यापकः। साध्याभावश्च व्याप्यः। तथा च यत्र एतत्तन्त्वारब्धत्वाभावः तत्र एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वं यथा पटान्तरे वर्तत इति उपाधेस्साध्यव्यापकत्वम् । यत्र एतत्तन्तुनिष्ठात्यन्ताभावाप्रति योगित्वाभावरूपं एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं एतत्पटे साध्यतया सन्दिह्यमानं इत्यतः, यत्र एतत्तन्तुनिष्ठात्यन्ताभावाप्रति योगित्वाभावः तत्र एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वं नास्ति, एतत्पटे एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य अभावात् । तस्मात् प्रतिपक्षानुमाने व्यतिरेकव्याप्तौ एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वं सन्दिग्धोपाधिः। एवं सोपाधिकत्वात्प्रतिपक्षानुमानमयुक्तं इति ।।

अत्रेदं वक्तव्यम् । सन्दिग्धोपाधिना अनुमानस्य दुष्टत्वाभिधाने वह्निमान् धूमात् इत्यादावपि विवक्षितवृक्षविशेषशून्यत्वादेरपि उपाधित्वस्य वक्तुं शक्यत्वेन अनुमानमात्रोच्छेदापत्तिः।

उपरि सूचितरीत्या उपाधेः प्रतिपक्षोन्नायकत्वस्वाभाव्येन प्रकृतानुमानस्य प्रतिपक्षानुमाने यत्प्रतिपक्षानुमानं तत्प्रकृतानुमानमेव भवति । तत्रोक्तोपाध्यभावस्य हेतुत्वं अयं पटः एतत्तन्तुनिष्ठात्य न्ताभावप्रतियोगी एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वात् इत्युक्तं भवति। तत्र च एतत्तन्त्वनारब्धत्वमेवोपाधिर्भवति। किञ्च उपाधेः स्वनिवृत्या पक्षे स्वव्याप्याभावसाधकत्वेन प्रकृते एतत्तन्तुनिष्ठप्रागभावा प्रतियोगित्वस्य उपाधेः स्वनिवृत्त्या स्वव्याप्यस्य एतत्तन्त्वा रब्धत्वाभावस्य अभावसाधकत्वमेव स्यात्, न तु प्रकृतसाध्यस्य (एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य) । तथा साधने सिद्धसाधनं नानिष्टमस्माकम् । किञ्च प्रागभावध्वंसयोः प्रतियोगिसमवायि देशमात्रवत्तित्वमिति नियमानङ्गीकर्तणां मते एतत्तन्त्वारब्धत्वाभाव

वति पटान्तरे एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वस्यापि सम्भवेन एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधेस्साध्यव्यापकताभङ्गः ॥

यदुक्तं ब्रह्मानन्दीये "उपाध्युन्नीतप्रतिपक्षानुमानदूषणत्वेन एतत्तन्त्वारोपितसर्पे व्यभिचार इति तदतीव चिन्त्यम् । एतत्तन्त्व वच्छिन्नचैतन्यस्यैव एतत्पटाद्युपादानत्वमित्यद्वैतमतसिद्धतया एतत्त न्त्वारब्धत्ववति एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगत्वस्य उभय सम्मतत्वेन एतत्तन्तुनिष्ठात्यान्ताभावाप्रतियोगित्वरूपसाध्याभाववति एतत्तन्त्ववच्छिन्नचैतन्यारोपितसर्पे एतत्तन्त्वारब्धत्वस्य हेतोस्सत्त्वेन व्यभिचारः" इति । मुख्ये सम्प्रत्ययन्यायेन सामानाधिकरण्य सम्बन्धत्वस्यैव अप्रातिभासिकत्वविशिष्टएतत्तन्त्वारब्धत्वस्यैव प्रति पक्षहेतुतया विवक्षितत्वेन उक्तचैतन्यारोपितसर्पे प्रातिभासिके व्यभिचारानवकाशात् ॥

अंशित्वहेतोर्दूषणावसरे न्यायामृते उक्तं "अन्यासमवेतस्य अंशित्वं एतत्तन्तुसमवेतत्वं विना न युक्तमिति विरुद्धो हेतुः" इति । तत्समाधानतयाऽद्वैतसिद्धावुक्तम् । "एतत्तन्तुनिष्ठात्यन्ताभावाप्रति योगित्वं एतत्तन्तुसमवेतत्वे प्रयोजकं न भवति । परमते केवलान्वयि धर्मस्य एतत्समवेतत्वापत्तेः । किन्तु एतत्तन्तुनिष्ठप्रागभावप्रति योगित्वादिकं "इति । एतदसङ्गतम् । एतत्तन्तुनिष्ठात्यन्ताभावाप्रति योगित्वस्य एतत्तन्तुसमवेतत्वव्यापकत्वेन व्यापकसद्भावेन व्याप्त्या पादनस्याताान्त्रिकत्वं स्फुटम् ॥

*****

# अष्टमः परिच्छेदः ।

"अज्ञानासम्भवादेव मिथ्याभेदो निराकृतः" इत्याचार्यैरनुव्याख्याने समर्थितम् । प्रपञ्चस्य अनाद्यज्ञानकल्पितत्वमभिधाय तस्य मिथ्यात्वमुक्तं परकीयैः ·। उक्तमनाद्यज्ञानं भावरूपमिति मन्यन्ते । अनुमानबलादेतदनादिभावरूपमज्ञानं सिद्धं इति वदन्ति । अनुमानं सर्वथा नैतत्साधनायालम् । तथाहि ।

अद्वैतसिद्धौ भावरूपाज्ञानसाधनावसरे तत्त्वप्रदीपोक्तं "चैत्रप्रमा। चैत्रगतप्रमाप्रागभावातिरिक्तानादेर्निवर्तकं प्रमात्वात् मैत्रप्रमावत्" इत्यनुमानमुपन्यस्योक्तम् । "साध्ये तु प्रमापदमुपरञ्जकमेव । यदि तु अभावे प्रागितिविशेषणं नास्ति तदा भावरूपाज्ञानस्यापि स्वाभावाभावत्वेन तदतिरिक्तानादिनिवर्तकत्वे बाधवारणाय सार्थकं" इति ॥

तत्र, अज्ञानस्य स्वाभावाभावरूपत्वेन पक्षभूतचैत्रप्रमायां अभावतिरिक्तानादिनिवर्तकत्वरूपसाध्याभावेन बाधः तद्वारणाय प्रागितिपदं सार्थकमिति चेत् अज्ञानध्वंसो ज्ञानानतिरिक्त इति तत्स्वीकारेण अज्ञानध्वंसप्रागभावस्याज्ञानरूपत्वेन प्राक्पददानेऽपि बाधवारणं न सम्भवति । अभावपदस्य भावभिन्नार्थकत्वे च अज्ञानस्य भावरूपत्वेन भावभिन्नत्वाभावात् प्राक्पदं व्यर्थमेव ॥

यदिच ज्ञानस्य ध्वंसप्रागभावरूपत्वेऽपि प्रमाप्रागभावरूपत्वाभावात् प्रमाप्रागभावातिरिक्तानादिनिवर्तकत्वं पक्षे वर्तत एवेति न बाध इत्युच्यते तर्हि घटप्रागभावध्वंसस्य घटस्वरूपत्वे

घटप्रागभावध्वंसप्रागभावस्य घटप्रागभावत्ववत् अज्ञानध्वंसस्य प्रमास्वरूपत्वे अज्ञानध्वंसप्रागभावस्याज्ञानरूपतया प्रमाप्रागभावात्म कत्वात् बाध एव । किञ्च प्रमापदमुपञ्जकमेवेति यदुक्तं तदसङ्गतमेव ॥

साध्ये प्रमापदमुपरञ्जकमित्युक्त्वा अद्वैतसिद्धावुक्तं "चैत्रासम वेतत्वं चैत्रन्यासमवेतत्वं च नोपाधिः । चैत्रसुखादौ व्यभिचारेण साध्याव्यापकत्वात्" इति । एददप्यसङ्गतम् । चैत्रसुखादौ चैत्रगत प्रमाप्रागभावातिरिक्तचैत्रगतसुखप्रागभावनिवर्तकत्वसत्त्वेऽपि प्रमा पदस्योपरञ्जकतया साध्यशरीरप्रविष्टत्वाभावेन चैत्रगतसुखस्य चैत्रगत प्रागभावातिरिक्तानादिनिवर्तकत्वरूपसाध्याभावेन चैत्रसुखादौ साध्य व्यापकताभङ्गानवकाशात् चैत्रासमवेतत्वं उपाधिरेव । प्रमापदस्य साध्यशरीरप्रविष्टत्वाङ्गीकारेऽपि प्रमात्वरूपसाधनावच्छिन्नसाध्यव्याप कतासम्भवाच्च ॥

अद्वैतसिद्धावुक्तं "चैत्रप्रमा, चैत्रगतस्याभावातिरिक्तस्यानादे र्निवर्तका न, प्रमात्वात् मैत्रप्रमावत् इति सत्प्रतिपक्षो न । प्रतियोग्यप्रसिद्धप्रसिद्धिभ्यां व्याहतेः इति ॥

तत्र, प्रतियोगिनः परप्रसिद्धिमात्रेणानुमानोपपत्तेः पारमार्थिक शुक्तिरूप्यं नास्तीत्यादाविव निषेध्यविशेषण प्रसिद्धेरनावश्यकत्वात् । प्रतीतेश्च युक्त्याभासादिनापि सम्भवात् न व्याहतिः ॥

किञ्च चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरक्तानादेर्निवर्तका प्रमात्वा दित्यनुमाने चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वं उपाधिरिति यदुक्तं तदसङ्गतं इति दूषितं परकीयैः । 'चैत्रगतप्रमाभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया पक्षे साधनव्यापकत्वात्'

इति। एतदपि न । प्रतियोगिनः स्वप्रागभावनिवर्तकत्वपक्षेऽपि व्यवहारस्यैव व्यवहारप्रागभावनिवर्तकत्वेन पक्षे साधनव्यापकत्वासंभवात् । चैत्रगतप्रमाभावातिरिक्ताभावनिवर्तकत्वस्याखण्डोपाधित्वोपपत्तेश्च ॥

किञ्च अयं घटः एतद्घटप्रागभावातिरिक्तानादेर्निवर्तकः घटत्वात् घटान्तरवत् इत्याद्याभाससाम्येन दुष्टमनुमानम् । "विपक्षे बाधकसत्त्वाच्चेति नाभाससाम्यं" इत्यद्वैतसिद्धावुक्तेऽपि विपक्षे न किञ्चिदपि बाधकं प्रदर्शितम् ॥

अद्वैतसिद्धावुक्तं "अत एव विगीतो भ्रमः एतज्जनकाबाध्यातिरिक्तोपादानकः भ्रमत्वात् सम्मतवत् इति द्वितीयानुमानमपि सम्यक् । न च विगीतो भ्रमः एतज्जनकबाध्यातिरिक्तोपादानकः भ्रमत्वात् सम्मतवत् इति सत्प्रतिपक्ष इति वाच्यम् । बाध्यस्य त्वन्मते अजनकत्वात् साध्याप्रसिद्धेः । ब्रह्माविद्योभयोपादानकत्वेनाविरोधाच्च" इति । एतदप्यसङ्गतम् । बाध्यस्य मन्मते अजनकत्वेऽपि परमतरीत्या बाध्यं यदेतज्जनकं तदतिरिक्तोपादानत्वरूपसाध्यस्य प्रसिद्धत्वेन साध्याप्रसिद्धेरनवकाशात् ब्रह्मातिरिक्तोपादानकत्वस्य साध्यशरीरे विवक्षितत्वेनाविरोधानवकाशश्च ॥

भावरूपाज्ञानसाधनावसरे उक्तमद्वैतसिद्धौ "अनुमानमपि तत्र विवरणोक्तं प्रमाणम् । विवादपदं प्रमाणज्ञानं स्वप्रागभावातिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इति ॥

" साध्ये आद्यं विशेषणं प्रतियोग्यतिरिक्ता प्रागभावनिवृत्तिः इति

मते प्रागभावेनार्थान्तरवारणाय । तदुदीच्यध्वंसादिकमादाय नार्थान्तर प्रसक्तिः, किन्तु पूर्ववृत्त्यभावमादायेति वस्तुगतिमनुरुध्य प्राक्पदा वैय्यर्थ्यं प्रतियोगिविशेषणत्वेनाखण्डाभावसम्पादकतया । एतेन यतो ज्ञानमज्ञानस्यैव निवर्तकं इति नियमात् 'स्वनिवर्त्य' पदेनैव प्रागभाव व्युदासे किमाद्यविशेषणेनेति निरस्तम् । प्रमात्वेन ज्ञाननिवर्त्यत्वं अन्येषां नेत्यत्र तात्पर्यात् । न च 'स्वविषयावरण' पदेनैव तद्व्युदासः । अस्ति, प्रकाशते, इति व्यवहारविरोधित्वरूपस्यावरणत्वस्य भावाभाव साधारणत्वात् । वृत्तिजनकादृष्टेनार्थान्तरतावारणाय विशेषणमिदम् । न च आवरणपदेनैवतद्व्युदासे स्वविषयेति व्यर्थम् । यददृष्टं स्वविषयकज्ञानजनकं विषयान्तरज्ञानप्रतिबन्धकतया तदावरकं तादृशा दृष्टपूर्वकत्वेनार्थान्तरवारकत्वात्" इति ॥

एवं स्वनिवर्त्यत्वस्वदेशगतत्वविशेषणयोरपि सार्थक्यमुपपादितम् । तथा च प्रमाप्रागभावमादायार्थान्तरतावारणाय स्वप्रागभावाति रिक्तत्वविशेषणम् । प्रमाजनकादृष्टविशेषमादायार्थान्तरतावारणाय स्वविषयावरणत्वविशेषणम् । प्रमाप्रतिबन्धकादृष्टविशेषमादायार्थान्तर तावारणाय स्वनिवर्त्यत्वविशेषणं (प्रतिबन्धनिवृत्यनन्तरमेव कार्योत्पत्तेः स्वप्रतिबन्धकस्य स्वनिवृत्त्यनन्तरमेव कार्योत्पत्तेः स्वप्रतिबन्धकस्य स्वनिवर्त्यत्वं नास्तीति) । विषयगताज्ञाततारूप धर्ममादायार्थान्तरतावारणाय स्वदेशगतत्वविशेषणमित्युक्तं भवति ॥

तत्र, स्वजन्यध्वंसप्रतियोगित्वरूपस्वनिवर्त्यत्वविशेषणा नाक्रान्तत्वेनैव स्वप्रागभावमादायार्थान्तरतानवकाशात्स्वप्रागभावाति रिक्तत्वविशेषणं व्यर्थम् । तथाहि । स्वप्रागभावे स्वनिवर्त्यत्वं नास्ति । कुत इत्युक्ते 'नाजात एकोऽन्यं हन्ति नाप्यन्याधार' इति न्यायेन

स्वस्याजातस्य प्रागभावनिवर्तकत्वायोगः । स्वस्य जननानन्तरं स्वप्रागभावनिवर्तकत्वे स्वस्य स्वप्रागभावस्य च किञ्चित्कालं समानकालीनत्वापत्तिः । भावाभावयोस्समानकालीनत्वायोगात् । स्वस्य आद्यक्षणसम्बन्ध एवोत्पत्तिः । क्षणे आद्यत्वञ्च स्वाधिकरणक्षणानुत्तरत्वम् ॥

यदि च घटध्वंसस्य घटजन्यतया घटध्वंसप्रागभावस्य घटरूपत्वमिव घटप्रागभावरूपत्वमप्यङ्गीक्रियते, घटध्वंसदशायां घटप्रागभावो अतीत इति व्यवहारेण अतीतत्वस्य च वर्तमान कालीनध्वंसप्रतियोगित्वरूपतया नाशं प्रति प्रतियोगिनः कारणत्वेन स्वजन्यो यो ध्वंसः स्वध्वंस एव तत्प्रतियोगित्वं स्वप्रागभावस्येति स्वजन्यध्वंसप्रतियोगित्वरूपस्वनिवर्त्यत्वविशेषणाक्रान्तत्वात् स्वप्राग भावस्य, तद्वारणाय स्वप्रागभावातिरिक्तत्वविशेषणं सार्थकं इत्युच्यते, तदाऽपि स्वनिष्ठजनकतानिरूपितजन्यताशालिध्वंसप्रतियोगित्वरूप स्वनिवर्त्यत्वशरीरघटकीभूतजनकतायां स्वतादात्म्यानवच्छिन्नत्व निवेशनेनैव स्वप्रागभावमादायार्थान्तरतावारणसम्भवेन तदर्थं स्वप्रागभावातिरिक्तत्वनिवेशनं व्यर्थमेव । अन्यथा अभावाधिकरण-काभावस्य अधिकरणीभूताभावस्वरूपत्वमिति पक्षे प्रमाणज्ञानध्वंस निष्ठप्रमाणज्ञानप्रतिबन्धकादृष्टध्वंसस्य प्रमाणज्ञानध्वंसरूपतया तत्प्रतियोगित्वं प्रमाणज्ञानप्रतिबन्धकादृष्टविशेषे अस्तीति स्वनिवर्त्यत्वविशेषणोपादानेऽपि प्रमाणज्ञानोत्पत्तिप्रतिबन्धकादृष्ट विशेषमादायार्थान्तरवारणमशक्यं स्यात् । स्वनिष्ठनाशजनकता यद्रूपावच्छिन्ना तद्रूपावच्छिन्नप्रतियोगितावत्वं स्वनिवर्त्यत्वं निवेश्यार्थान्तरं वारणीयम् । तत एवोक्तरीत्या अर्थान्तरवारणसंभवे स्वप्रागभावातिरिक्तत्वविशेषणं व्यर्थमेव ॥

स्वजन्यध्वंसप्रतियोगित्वं विहाय स्वोत्पत्त्यधिकरणक्षणोत्पत्ति कध्वंसप्रतियोगित्वरूपं स्वनिवर्त्यत्वं इत्युक्ते अज्ञानस्य ज्ञानजन्य ध्वंसप्रतियोगित्वं विना स्वनिवर्त्यत्वसम्भवेन न स्वसिद्धान्तसिद्धाज्ञान साधनं भवतीत्यर्थान्तरमेव। एतादृशं स्वनिवर्त्यत्वं घटोत्पत्त्यधिरणपूर्व क्षणेप्यस्ति। कथमित्युक्ते, स्वं घटःस्वोत्पत्त्यधिकरणक्षणे विद्यमानो यो ध्वंसः तत्पूर्वक्षणध्वंसः तत्प्रतियोगित्वं पूर्वक्षणस्येति घटात्तत्प्रागभावो निवर्तते ज्ञानादज्ञानं निवर्तते इतिवत् घटात्तदुत्पत्त्यधिकरणक्षणपूर्व क्षणो निवर्तते इति प्रयोगापत्तिः। तस्मात् स्वजन्यध्वंस प्रतियोगित्वरूपस्वनिवर्त्यत्वविशेषणेनैव स्वप्रागभाववारणसम्भवे स्वप्रागभावातिरिक्तत्वविशेषणं व्यर्थमेव॥

एवं स्वविषयावरणत्वाभावादेव वा स्वप्रागभावस्य वारणं सम्भवति। कथमित्युक्ते, स्वविषयावरणत्वं च स्वविषयविषयक ज्ञानोत्पत्तिप्रतिबन्धकत्वं तच्च स्वप्रागभावे नास्तीति। यदि च स्वप्रागभावस्य स्वसत्तादशायां अस्ति भाति इति ज्ञानव्यवहार विरोधित्वं स्वीक्रियते तर्हि स्वोत्पादकादृष्टविशेषस्यापि स्वसत्तादशायां अस्ति भातीत्यादिज्ञानव्यवहारविरोधित्वेन तदादायार्थान्तरं दुर्वारं स्यात्। एवमपि प्रमाणज्ञानजनकं तत्समानज्ञानान्तरप्रतिबन्धकं च यदृष्टं तदादायार्थान्तरं दुर्वारम्। न च तदप्रामाणिकम्। भवदुक्तिमात्रेण तस्याप्रामाणिकत्वनिर्णयायोगात्।

ब्रह्मानन्दीये तूक्तं " न च तथाऽपि स्वजनकं स्वसमानविषयक ज्ञानान्तरप्रतिबन्धकं चादृष्टमादायार्थान्तरमिति वाच्यम्। आलोक विषयाप्रसिद्ध्या स्वविषयकोक्तव्यवहारनिवेशासम्भवेन स्वप्रयुक्त व्यवहारप्रतिबन्धकत्वनिवेशात् ज्ञानान्तरप्रतिबन्धकस्य स्वप्रयुक्तोक्त

व्यवहारप्रतिबन्धकत्वाभावात्" इति ।

अत्र, स्वप्रयुक्तव्यवहारविषयविषयकज्ञानोत्पत्तिप्रतिबन्धकत्वरूप स्वविषयावरणत्वस्योक्तादृशादृष्टविशेषे सम्भवेन अर्थान्तरं दुर्वारम् । एवं प्रदीपप्रभा तत्प्रयुक्तो यो व्यवहारः घटोऽस्ति भातीत्यादिव्यवहारः तद्विषयो घटः तद्विषयकज्ञानोत्पत्तिप्रतिबन्धकत्वं अन्धकारस्येति । तथा एवं प्रमाणज्ञानजनकं अदृष्टं तत्प्रयुक्तव्यवहारः अहं ब्रह्मेति ब्रह्म विषयकव्यवहारः तद्विषयविषयकं अज्ञानान्तरं प्रमाणज्ञानान्तरं तदुत्पत्तिप्रतिबन्धकत्वं प्रमाणज्ञानजनके तत्समानज्ञानान्तरप्रतिबन्धके अदृष्टविशेषे सम्भवत्येवेति अर्थान्तरं दुर्वारम् ।।

अद्वैतसिद्धावुक्तं "स्वनिवर्त्येति विशेषणं च वृत्ति प्रतिबन्धकादृष्टेनार्थान्तरवारणाय । न च चरमसाक्षात्कारोत्पत्ति प्रतिबन्धकादृष्टस्य तदनिवर्त्यत्वे मिथ्यात्वासिद्धिः । तन्निवर्त्यत्वे तद्व्युदसनमशक्यमिति वाच्यम् । प्रतिबन्धकादृष्टे विद्यमाने न ज्ञानोत्पत्तिरिति प्रथमं तन्निवृत्तेः । कारणात्मना स्थितस्य ज्ञान निवर्त्यत्वाच्च मिथ्यात्वम् । न चैवमपि स्वनिवर्त्यत्वमव्याहतम् । स्वनिवर्त्यस्वरूपत्वे तात्पर्यात्" इति । अत्र, चरमसाक्षात्कार प्रतिबन्धकादृष्टविशेषध्वंसाव्यावहितोत्तरक्षणे साक्षात्कारस्य जातत्वेन तादृशादृष्टविशेषस्य चरमसाक्षात्कारनिवर्त्यत्वस्यैव वाच्यतया अज्ञानस्य स्वकार्येण *वर्तमानेन प्रविलीनेन सह निवृत्तिर्बाध इति भवदीयोक्त रीत्या चरमसाक्षात्कारप्रतिबन्धकादृष्टविशेषमादायार्थान्तरं दुर्वारम् ।।

अद्वैतसिद्धावुक्तं "स्वदेशगतेति विशेषणं विषयगताज्ञातत्वेना-

---

* अज्ञानकार्यं प्रतिबन्धकादृष्टविशेषः । उभयोरेका निवृत्तिः । न तु कारणात्मना स्थितस्याज्ञानस्य मात्रम् ।

र्थान्तरवारणाय । यद्यप्यविद्याविषयत्वरूपमज्ञातत्वमसिद्धम् । ज्ञातत्वाभावरूपं तु प्रथमविशेषणेनैव परास्तम् । तथाऽपि प्रथमेन प्रागभावव्युदासादत्यन्ताभावव्युदासाय चतुर्थमिति द्रष्टव्यं" इति ॥

अत्र, एकेनैवाभावव्यतिरिक्तत्वविशेषणेन उभयवारणे विशेषण द्वयोपादानमनर्थकमेव ॥

अद्वैतसिद्धावुक्तं "कथं ज्ञानाश्रयगतत्वं अज्ञानस्य । वृत्त्यादिरूपस्य ज्ञानस्याज्ञानाश्रयचिदनाश्रितत्वादिति चेन्न । अन्तःकरणस्य चिदाश्रितत्वेन तद्वृत्तेः । तत्प्रतिफलितचैतन्यस्य वा ज्ञानस्य चिदाश्रितत्वसम्भवात् । किञ्चिदवच्छिन्नतदाश्रितस्यापि तदाश्रितत्वानपायात् । कर्णशष्कुल्यवच्छिन्नाकाशाश्रितस्य शब्दस्याकाशाश्रितत्ववत् । एवञ्च भावाभावसाधारणमावरकत्वमिति मतेन साध्यमुपपादितम् । अभावो नावरक इति सिद्धान्ते तु साध्यद्वये तात्पर्यम् । स्वप्रागभावातिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकं स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरं इति न किञ्चदसमञ्जसं" इति ॥

अत्र, विषयगतत्वेनाभिमतस्याज्ञानत्वस्य विषयावच्छिन्न चैतन्याश्रितत्वेन प्रमाणज्ञानस्याप्यन्तःकरणावच्छिन्नचैतन्याश्रितत्वेन चैतन्यैक्यात्स्वदेशगतत्वसम्भवेन विषयगताज्ञातताभादायार्थान्तरं दुर्वारम् ॥

अभावो नावरक इति पक्षे विषयगतज्ञातत्वाभावस्य स्वविषयावरणत्वाभावादेव वारणसम्भवेन स्वदेशगतत्वविशेषणं व्यर्थम् । ब्रह्मान्दीये परिष्कृतम् । "स्वदेशगतत्वं स्वाश्रयतावच्छेदकान्य

देशानवच्छिन्नाश्रयताकत्वं वाच्यम् । अन्यथा स्वाश्रयगतत्वमात्रेण विषयगताज्ञातत्ववारणस्य वक्ष्यमाणस्यासम्भवात् । स्वाश्रयत्वगतत्वे हि तादात्म्येन सम्बन्धेन वाच्ये । तादात्म्येनैवालोकतमसोर्वृत्त्य ज्ञानयोश्चैकचिति सत्त्वात् । तथा च विषयगतो ज्ञातत्वाभावोऽपि वृत्तितादात्म्यवत्यां विषयचिति तादात्म्येनैव सम्बद्धः । एवं च तमसो वृत्तितादात्म्यापन्नचित्तादात्म्येऽपि वृत्त्याश्रयतानवच्छेदकदेशा वच्छेदकदेशावच्छिन्नत्वेन व्युदासः । न हि तमोवृत्त्यवच्छेदकदेशेनैवा वच्छिद्यते । मानाभावात् । अज्ञानं तु वृत्तिनाश्यत्वात्तथा । न च तमोऽवयवस्तथा सम्भवतीति वाच्यम् । तमसस्सावयवत्वे मानाभावात्" इति ।।

अत्र, योगसामर्थ्येनानेकशरीरस्य सौभर्यादेर्योगिनः एकस्मिन् शरीरे ज्ञाने जाते तादृशज्ञानस्य अज्ञानोपहितचिदेव ज्ञानाज्ञानयोराश्रय इति भाव इति ब्रह्मानन्दीये एतत्प्रकरणे उक्तरीत्या अज्ञानसमानाश्रयत्वेन एकस्य ज्ञानोत्पत्तौ सर्वस्याप्यज्ञाननिवृत्त्यापत्त्या तत्तदन्तःकरणावच्छिन्न चैतन्याश्रिताज्ञाननिवर्तकत्वं तदन्तःकरणावच्छिन्नचैतन्याश्रित ज्ञानस्येति वक्तव्यतया- "न ह्येकशरीरस्थमन्तःकरणाद्यन्यशरीरस्थं भवति" इत्युक्तरीत्याऽन्तःकरणादेर्भिन्नत्वेन एकस्मिन् शरीरे जातस्य ज्ञानस्य शरीरान्तरीयान्तःकरणावच्छिन्नचिदाश्रिताज्ञाननिवर्तकत्वं न स्यात्, स्वाश्रय गतावच्छेदकान्यदेशानवच्छिन्नाश्रिताकत्वरूपस्वदेश गतत्वाभावात् ।।

ब्रह्मनन्दीये उक्तं "द्वितीयसाध्ये स्वदेशगतत्वं न विषयगताज्ञातत्ववारणाय । प्रागभावस्येवात्यन्ताभावस्यापि ज्ञानीयस्य स्वविषयावरणपदेनैव वारणात् । तथाहि जीवेशविभागपूर्वकत्वेन

ब्रह्मप्रमायां सिद्धसाधनवारणाय तत् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि प्रमामात्रमेकं जीवेशविभागं निवर्तयति । तस्यैव कुप्तजातीयस्य स्वविषयावरणत्वमप्यास्तां नास्तां च । आवरणस्य तस्य सौषुप्तनिर्विकल्पकविषयत्वं नाविशेषमित्यस्यानुभव त्वसम्भवादित्यर्थान्तरात्" इति ॥

अत्र, "एतेन ःयतो ज्ञानमज्ञानस्यैव निवर्तकमिति नियमात् स्वनिवर्त्यपदेनैव प्रागभावव्युदासे किमाद्यविशेषणेनेति निरस्तम् । प्रमात्वेन ज्ञाननिवर्त्यत्वं अन्यत्र नेत्यत्र तात्पर्यात्" इत्यद्वैतसिद्धावुक्तरीत्या स्वावच्छेदकावच्छिन्नस्वनिष्ठजनकता निरूपितजन्यताशालिध्वंसप्रतियोगित्वरूपस्वनिवर्त्यत्वस्य जीवेश विभागे अभावेनार्थान्तरावकाशः । न हि जीवेशविभागे अद्वैतसिद्ध्युक्तप्रकारेण प्रमात्वेन ज्ञाननिवर्त्यत्वं सम्भवति ॥

प्रमाणज्ञानत्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे प्रथमप्रमाण ज्ञानेनाज्ञाने नष्टे द्वितीयादिप्रमाणज्ञानेषु तादृशवस्त्वन्तरपूर्वकत्व स्याभावेन साध्याभावाद्बाधः। सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेन च स्वसमानविषयकज्ञानान्तराजनकस्वजनकादृष्टविशेषमादाय सिद्ध साधनम् । वेदान्तजन्यनिष्प्रकारकचरमसाक्षात्कारत्वावच्छेदेन साध्य सिद्धेरुद्देश्यत्वे च घटादिज्ञाननिवर्त्यघटाद्यज्ञानसाधनायानुमानान्तरं वक्तव्यं स्यात् । घटाद्यज्ञानं नाम घटाद्यवच्छिन्नचैतन्याश्रितमज्ञानमेव। तच्च एतदनुमानतस्सिद्धमित्युच्यते चेत्तर्हि घटादिज्ञानेन घटाद्यव च्छिन्नचैतन्यस्य प्रकाशितत्वेन अप्रकाशितार्थप्रकाशकत्वरूपहेतोः पक्षे अभावात्स्वरूपासिद्धिः ॥

किञ्च तमोनिवर्तकत्वं उपाधिः । तथाहि । प्रदीपप्रभायां उक्तसाध्यं

वर्तते । तमोनिवर्तकत्वरूपोपाधिरपि वर्तते इति साध्यव्यापकत्वम् । साधनं पक्षे वर्तते तत्र तमोनिवर्तकत्वं नास्तीति साधनाव्यापकत्वञ्चेति। न च सौषुप्तसुखाकाराविद्यावृत्यादौ तत्सुखावरकस्वाप्न प्रबुध्यादिनिवर्तके उक्तसाध्यस्य सत्त्वेन तदव्यापकत्वात्साध्य व्यापकताभङ्ग इति वाच्यम् । साधनावच्छिन्नसाध्यव्यापकत्वोपपत्तेः । ब्रह्मत्वरूपोदासीनधर्मावच्छिन्नसाध्यव्यापकत्वोपपत्तेश्च । अनुकूल तर्काभावश्च ॥

अद्वैतसिद्धावुक्तं "हेतौ च प्रकाशकत्वं प्रकाशपदवाच्यत्वं अप्रकाशितत्वं च न प्रकाशत इति व्यवहारगोचरत्वम् । तच्च स्वप्रकाश चैतन्येऽप्यस्ति । एवं निरुक्तप्रकाशविरोधित्वमपि ज्ञानालोकयोः प्रत्यक्ष सिद्धम् । अतः उभयोरेव साक्षादप्रकाशविरोधित्वसंभवान्नेन्द्रिय सन्निकर्षादौ व्यभिचारः । एवञ्चाप्रकाशितार्थगोचरत्वे सति प्रकाश शब्दवाच्यत्वात अप्रकाशविरोधित्वात् इति वा हेतुः पर्यवसितः" इति ।

अत्र प्रकाशोऽतिप्रसिद्धेऽपि प्रकाशः काशवानपीति कोशबलाच्चक्षुः प्रकाशते सविता प्रकाशते इति प्रतीतिबलाच्च चक्षरिन्द्रिये सवितरि च व्यभिचारः । अप्रकाशितो योऽर्थः घटादिरूपोऽर्थः तद्गोचरत्वं प्रकाश पदवाच्यत्वं च चक्षुरिन्द्रियेऽप्यस्तीति व्यभिचारः । अप्रकाश विरोधिप्रकाशकत्वं सवितर्यस्तीति व्यभिचारः ।

किञ्च आलोकविषयाप्रसिद्धेति ब्रह्मानन्दीये उक्तरीत्या दृष्टान्ते आलोके अप्रकाशितार्थगोचरत्वस्याभावात्साधनवैकल्यम् । पक्षीभूत प्रमादृष्टान्तभूतालोकयोरन्यतरत्वं च हेतुरित्यपि सूचितं ब्रह्मान्दीये । एवं चेल्लोके साधनवैकल्योच्छेदप्रसङ्गः । सर्वत्र पक्षदृष्टान्तान्यतरत्वस्य हेतूकर्तुं शक्यत्वात् ।

अप्रकाशितार्थप्रकाशकत्वं च स्वाधिकरणनिष्ठस्वान्यूनविषयकं संशयान्यत् यत्सविषयकं तदव्यवहितोत्तरत्वशून्यप्रमाप्रभान्यतरत्वं इति परिष्करणमप्ययुक्तम् । घटोऽयमित्यनुभवानन्तरं कालव्यवधाने जाते घटोऽयमित्यनुभवे व्यभिचारः । पूर्वानुभवेनैव तद्विषयकज्ञानस्य नष्टत्वात् साध्याभाववत्त्वं प्राप्तम् । तत्र हेतोस्सत्त्वाद्व्यभिचारः । ज्ञानेच्छाकृत्यादीनामेव सविषयकत्वेन प्रभायाः सविषयकत्वस्य कैरप्यनङ्गीकारेण प्रथमप्रभया अन्धकारनिरासे द्वितीयादि प्रभायामुक्तसाध्यस्याभावेन उक्तस्य हेतोस्सत्त्वात् व्यभिचारः ।

किञ्च स्वप्रागभावस्य स्वविषयावरणत्वे प्रमाणज्ञानप्रागभावस्यैव प्रमाणज्ञानविषयब्रह्मावरणत्वसम्भवेनाप्रयोजकत्वं हेतोः । अयं घटः एतद्घटप्रागभावातिरिक्तस्वावरणानादेर्निवर्तकः घटत्वात् घटान्तरवत् इत्याभाससाम्यञ्चानुमानम् इति ।

हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ।
मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात् ॥

इति स्तौमीष्टलाभाय सौधमध्वोऽन्यनाशधीः ।
प्रदश्याद्वैतसिद्ध्युक्तसन्न्यायामृतदूषणे ॥
अलग्नतां तत्र मुहुः प्रदर्शयितुमायते ।

न्यायामृतसुधाचार्यहृद्गमध्वार्यबुद्धिगाः ।
कृपयन्तां रामकृष्णव्यासाः श्रीनृहयात्मकाः ॥

श्रीकृष्णार्पणमस्तु

|| श्रीः ||

यद्विद्या मरुदागमार्थविषया दृष्टिः परत्वे हरेः
यद्बुद्धिर्हरिपादसङ्गचतुरा हृद्या परं बोधने ||
यत्सिद्धिः परशास्त्रसन्निरसने वृद्धी रतौ वैष्णवे
श्रीविश्वप्रियमध्वनाथयतिराट् सोऽयं गुरुः पातु नः ||

## ग्रन्थकाराणां विषये काचिदुक्तिः

श्रीविश्वप्रियमध्वनाथश्रीपादाः पूर्वाश्रमे ताम्रपर्णी मध्वाचार्या इति ख्याताः कावेरीतीरे भूवैकुण्ठायमाने श्रीरङ्गक्षेत्रे श्रीमदाचार्यशास्त्रपाठप्रवचनादिभिः कुलभूषणायमाना अवात्सुः । परमतनिरसनचणा इमे 'सत्पद्यभूषासाहस्री' नामकं ग्रन्थरत्नं तथा अनेकानपि वादग्रन्थान्प्रणिनिन्युः । चतुःशास्त्रकोविदास्तपोनिष्ठा अमी आचार्याः अप्रतिग्रहवृत्त्या श्रीद्रोणाचार्यान् स्मारयन्तः कठिनमपि संसारभरं वरमिव भगवतः परमात्मनः वहन्तः स्वायुः सार्थकीचक्रुः निजतनुजन्मनि सुकीर्तिमति गीतार्थविभूषणशिरोमणौ श्री सि. एम्. पद्मनाभाचार्ये भवभरं न्यस्य क्रिस्ताब्द 1910 तमे, सन्न्यासं स्वीकृत्येतोप्यतिशयनीं श्रीभगवत्सेवां व्यदादधुः । क्रिस्ताब्द 1931 तमे परमपवित्रश्रीरङ्गक्षेत्रे वृन्दावनं प्रविविशुः । स्वग्रन्थैरद्यापि अस्मन्मनसि लसमानाः इमे श्रीचरणाः स्वाशीराशिभिरस्मानुद्धरन्तु ||